अपने प्यारे चहेते के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दामामा




**प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में—**
आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु
**—और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती**

**चन्दे की दरें (वार्षिक)**

**आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए**

समुद्री जहाज़ से रु. 105.00   वायु सेवा से रु. **252.00**

**फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,**
**पश्चिम जर्मनी और दूसरे देशों के लिए**

समुद्री जहाज़ से रु. 111.00   वायु सेवा से रु. **252.00**

**अपने चन्दे की रकम डिमांड ड्रॉफ्ट या मनी ऑर्डर द्वारा**
**'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:**

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.

# तदीयं परिश्रममात्रं प्रायः न अलम्।
# भवतः योजना तदीयं भाविजीवनम् उज्ज्वलं कुर्यात्।






सफलताप्राप्त्यर्थं मध्यरात्रे यथा तैलस्य अपव्ययः, तथैव सङ्कल्पशक्तेः अपि भवेत्। किन्तु यु.टि.ऐ.संस्थायाः 'चिल्ड्रन्स् कालेज् एण्ड् केरियर्स् फण्ड्' योजनायां भवता क्रियमाणं धननियोजनं तु प्रायः तस्य महत्तमलक्ष्यस्य सिद्धौ उपकुर्यात्।

यदि भवतः अपत्यस्य वयः १५ वर्षेभ्यः अधिकं न स्यात् तर्हि इदानीम् एव धनस्य विनियोगः क्रियताम्, येन तस्य भविष्यनिर्माणस्य आरम्भः कृतः भवेत्। एतत् तस्य पदवीशिक्षणे वृत्त्यारम्भसमये वा अवश्यम् उपकरिष्यति। आवश्यकतायां सत्यां, तस्य शुल्कदानादिनिमित्तम् इतः क्रमबद्धः प्रतिस्वीकारः अपि शक्यः। प्रतिवर्षम् एतस्यां योजनायां भवान् यावदधिकं धनविनियोजनं करोति तावत् भवदपत्यस्य भविष्यम् अपि उज्ज्वलं भविष्यति, यतः यथा यथा भवदपत्यं वर्धते तथा तथा भवद्धनम् अपि यथा वर्धेत तथा व्यवस्थां करोति युनिट् ट्रस्ट् आफ् इण्डियासंस्था।

## योजनावैशिष्ट्यानि

- १५ वर्षीयाणां बालानां निमित्तम् एषा योजना। ते यदा १८-२३ वयसि भवन्ति तदा क्रमानुसारं प्रतिस्वीकरणार्थम् अवकाशः।
- एकस्य अंशस्य (Unit) मूल्यं रू. १०/-. धनविनियोजनार्थं कनिष्ठमितिः रू. २०००/-. ततः ऊर्ध्वं ५०० रूप्यकाणां गुणकपरिमाणेन विनियोजनं भवितुम् अर्हति, यावत् भवदपत्यं १५ वर्षीयं भवति तावत्।
- वर्षे द्विवारं भागशः प्रतिस्वीकारव्यवस्था। १८ वयसि ५०% प्रतिस्वीकारस्य अङ्गीकारः। २३ वयः पर्यन्तं प्रतिवर्षं १०% प्रतिस्वीकरणार्थं व्यवस्था अपि।
- अन्यस्य अपत्यस्य नामनिर्देशार्थं व्यवस्था अपि अस्ति।

आवेदनापत्रं युनिट्ट्रस्ट् कार्यालयतः, मुख्यप्रतिनिधितः, अभिकर्तृतः वा प्राप्तुं शक्यते।



UNIT TRUST OF INDIA
*For your better tomorrow*

सर्वविधाः सुरक्षितधनविनियोजनाः अपि वृद्धिह्रासाभ्यां विनिर्मुक्ताः तु न। धनविनियोजनात् पूर्वं मार्गदर्शकस्य प्रतिनिधेः वा मार्गदर्शनं प्राप्नुवन्तु।

सप्टम्बर्-३०तः ये धनविनियोगं कुर्वन्ति तेषु १००० जनाः पुरस्कारान् प्राप्स्यन्ति



**CHILDREN'S COLLEGE AND CAREER FUND**
UNIT PLAN-93

## योजनारम्भदिनाङ्कः १२, जुलै-१९९३

**Zonal Office:** 29, Rajaji Salai, Madras 600 001. Ph: 517101.
**Branch Offices:** • **Bangalore.** Ph: 263739 • **Cochin.** Ph: 362354 • **Coimbatore.** Ph: 210399 • **Hubli.** Ph: 62934 • **Hyderabad.** Ph: 511095 • **Madras.** Ph: 517101, 517190 • **Madurai.** Ph: 38186 • **Thiruvananthapuram.** Ph: 76015 • **Trichur.** Ph: 331259 • **Trichy.** Ph: 32619 • **Vijayawada.** Ph: 63964 • **Visakhapatnam.** Ph: 50275

UTI 44.93 SK

# दिल्ली संस्कृत अकादम्याः १९९२-९३

## सत्रे समायोजितानां कार्यक्रमाणां विवरणम्

**१. सम्मेलनानि**

१. अखिल भारतीय संस्कृत कवि सम्मेलनम्

२. अखिल भारतीय त्रिदिवसीय संस्कृत पत्रकारिता सम्मेलनम्

३. स्थानीय संस्कृत कवि सम्मेलनम्

**२. संगोष्ठ्य :**

४. शंकराचार्यस्य साहित्यं जीवनमुत्थानिं च

५. संस्कृत साहित्ये कृषिविज्ञानम्

६. भाषासाहित्ययोः दृष्टया संस्कृत-पञ्जाबीभाषयोरनन्तसम्बन्धः

७. वाल्मीकि रामायणे स्त्रीणां स्थानम्

८. पण्डितराज जगन्नाथस्यसाहित्ये लोक चिन्तनम्

९. संस्कृत शिक्षक संगोष्ठी

१०. जैनदर्शने राष्ट्रैक्यम्

११. वेदेषु पर्यावरणम्

**३. परिचर्ये**

१२. महाभारतकाले शिक्षण व्यवस्था

१३. ज्योतिषशास्त्रस्याधारे वृष्टिविज्ञानम्

**४. परिसम्वादौ**

१४. प्राचीन विधिशास्त्रे दण्ड प्रक्रिया

१५. भारतीयास्मिता जातिव्यवस्था च

**५. अध्ययनाध्ययनकार्यक्रमौ**

१६. पुनर्वासबस्ती ख्यालाग्रामे संस्कृताध्ययनकेन्द्र स्थापना

१७. फैजरोडस्थ दुर्गामन्दिरे संस्कृताध्ययन केन्द्रस्थापना

**६. संस्कृत लेखकसयोगे**

१८. डॉ. सत्यव्रतशास्त्रिप्रणीतग्रन्थार्थिकसहयोगः

१९. डॉ. कृष्णदत्तभारद्वाजप्रणीतग्रन्थार्थिकसहयोगः

**७. प्रकाशनानि**

२०. महावुद्धवत्थु नाम्नः ग्रन्थस्य द्वितीय तृतीयभागस्योः प्रकाशनम्

२१. संस्कृतमञ्जरी पत्रिका प्रकाशनम्

२२. अकादम्याः विवरणपरा वार्षिकी प्रकाशनम्

**८. संस्कृतस्तोत्र-काव्य टेपयोजना**

२३. मेघदूतस्य संगीतात्मकं ध्वनिकरणम् (यन्त्रस्थ)

२४. सौन्दर्यलहर्या ध्वन्यंकनं विचाराधीनम्

**९. जयन्तयः**

२५. शंकराचार्य जयन्ती

२६. वेदव्यास जयन्ती

२७. वाल्मीकि जयन्ती

२८. पण्डितराज जगन्नाथ जयन्ती

२९. डॉ. गोस्वामी गिरधारी लाल जयन्ती

**१०. प्रतियोगिताः**

३०. स्नातक स्नातकोत्तर स्तरीया श्लोकान्त्याक्षरी प्रतियोगिता

३१. मध्यमास्तरीया श्लोकान्त्याक्षरी प्रतियोगिता

३२. विद्यालय स्तरीयाश्लोकोच्चारण प्रतियोगिता

३३. महाविद्यालय स्तरीया श्लोक संगीत प्रतियोगिता

३४. विद्यालयस्तरीया श्लोक संगीत प्रतियोगिता

३५. स्नातकस्नातकोत्तरस्तरीया संस्कृत भाषण प्रतियोगिता

३६. मध्यमास्त[illegible]या संस्कृत भाषण प्रतियोगिता

३७. विद्यालयस्तरीया संस्कृत भाषण प्रतियोगिता

३८. महाविद्यालयस्तरीया संस्कृत नाटक प्रतियोगिता

३९. विद्यालयस्तरीया संस्कृत नाटक प्रतियोगिता

४०. विद्यालयस्तरीया एकल श्लोक संगीत प्रतियोगिता

४१. महाविद्यालयस्तरीया एकल श्लोक संगीत प्रतियोगिता

४२. संस्कृत विद्यालयस्तरीया एकल श्लोक संगीत प्रतियोगिता

**११. सम्मानकार्यक्रमाः**

४३. संस्कृत साहित्य सेवा सम्मानः

४४. विद्यालय संस्कृत सेवा सम्मानः

४५. अकादमी सहयोगि सम्मानः

४६. महाविद्यालयीय संस्कृत सेवा सम्मानः

**१२. पुरस्काराः**

४७. संस्कृत प्रतिभा पुरस्कारः

४८. संस्कृत शिक्षक पुरस्कारः

४९. अखिल भारतीय संस्कृत मौलिक साहित्य , रचना पुरस्कारः (विचाराधीनः)

**१३. समारोहाः**

५०. महाबुद्धवत्थुग्रन्थार्पणा समारोहः

५१. अकादम्या आर्थिक सहयोगेन प्रकाशितानां ग्रन्थानां लोकार्पणम्

५२. अकादमी माध्यमेन ध्वन्यांकितानां स्तोत्राणां लोकार्पणम्

५३. संस्कृत शिक्षक पुरस्कार समारोहः

५४. संस्कृत दिवससमारोहः

५५. प्रतियोगिता पुरस्कार वितरण समारोहः

**१४. टेली फिल्म योजना**

५६. आजाद चन्द्रशेखरस्य व्यक्तित्वमवलम्ब्य प्रस्ताविता टेलीफिल्म योजना विचाराधीना

**१५. संस्कृत पत्र-पत्रिकाणां सहयोगः**

संस्कृत पत्र-पत्रिकाणां कृते विज्ञापन-माध्यमेनार्थिक सहयोगः प्रदीयते ।

**१६. पुस्तकालय स्थापना**

**१७. छात्रवृत्तिः**

# एक्को-साहाय्येन मुख-छायाकृतीः कुरुत!

एक्को-रेखाटन-लेखन्या (स्केच पेन) मुख-छायाकृतीनां निर्माणं न केवलं सुकरम्, अपि तु नितरां मनोविनोदनपरमपि।
समुज्ज्वलवर्णाः एक्को-लेखन्यः १२, २४, ३० इति संख्यात्मकेषु आवेष्टनेषु उपलब्धाः सन्ति।
अयं पुनरत्र विशेषः यत् एक्को-लेखन्यः जलाधारिताः निर्विषाश्च भवन्ति।
तस्माद् एव तासाम् उपयोगः सर्वथा सुरक्षितः।
विचार्यतां तावत्, कियान् भवेत् अम्बायाः प्रमोदः युष्माकं छायाकृतीः विलोकयन्त्याः।

एवं एक्को नाम अक्षय्यः आनन्दः।

विजयद्भ्यः सहस्रशः पारितोषिकाणि।
एक्को-'फन-मुख-कला' स्पर्धायां सहभागिनः भवत।
आवेष्टने सह प्रवेशपत्रिकाः सन्ति।



Ekco®

युष्माकं चित्रकलाभिव्यक्तेः सर्वोत्तमं साधनम्।



Karishma/SW/6/2016 SK B

किम् बहुना स्वादुता यत्र !

लिज्जता पर्पटि तत्र !!




# लिज्जत

पर्पटि

रुचिः वर्धतेऽन्नस्य तथैव तृप्तिं करोति।

उडिद, उडिद स्पेशल, मूग, पंजाबी स्पेशल, लसूण, मिर्चि




श्री महिला गृह उद्योग लिज्जत पापड

# चन्दमामा

संस्थापकः– 'चक्रपाणिः'　　सञ्चालकः– 'नागिरेड्डी'




## शालागमनात् बालानां विमुखता

इदानीं समग्रे भारते यद्यपि प्राथमिकशालाशिक्षणं निश्शुल्कम् अस्ति, तथापि विद्याभ्यासस्य मध्ये एव शालागमनं परित्यजतां सङ्ख्या महती एव दृश्यते। एतत् पश्यतां सर्वकाराणाम् एतद्विषये चिन्ता सहजा एव खलु? तमिळनाडु-महाराष्ट्रादीनि कानिचन राज्यानि, 'बालकाः किमर्थं शालागमनात् विमुखाः भवन्ति?' इति ज्ञातुं प्रयत्नं कृतवन्तः।

तमिळनाडुराज्यीयं सद्यःकृतं किञ्चन सर्वेक्षणं निरूपयति यत् चतुर्थकक्ष्यागमनात् पूर्वम् एव २५% बालाः कुटुम्बस्य आर्थिकसाहाय्यं कर्तुं विद्याभ्यासं परित्यजन्ति इति। पुनः २५% बालाः सहोदराणां पालनं, पशुपालनं, पाकः इत्यादीनां कार्याणां निमित्तं शालागमनं परित्यजन्ति, यतः तेषां मातापितरौ अन्यत्र कार्यार्थं गच्छतः। एतादृशानाम् आर्थिककारणानां निमित्तं ये बालाः शालागमनं परित्यजन्ति, शालां प्रति तेषां पुनरानयने प्रायः सर्वकारः अपि असमर्थः एव भवति।

माहाराष्ट्रीयं सर्वेक्षणम् अन्यम् अंशं ज्ञापयति यत् बालानाम् आकर्षणार्थं शालायां किमपि न भवति इति। तत् सर्वेक्षणं सूचयति - 'शालायां शिक्षणतन्त्राणि दुर्बलानि भवन्ति, यस्य च परिणामतः बालाः पठने रुचिमन्तः न भवन्ति। एवम् एव अध्यापकेन उपयुज्यमानं पाठ्यपुस्तकं रचयितॄणां ज्ञानस्तरमात्रं द्योतयति, न तु अध्यापने शिक्षकस्य उपकाराय भवति' इति।

देहलीशासनेन पाठ्यपुस्तकविषये सर्वेक्षणं कृतम्। ततः ज्ञायते यत् पूर्वप्राथमिकच्छात्रैः प्रतिवर्षं सप्त पुस्तकानि नेतव्यानि, अनन्तरकक्ष्यीयैः छात्रैः च प्रायः दश पुस्तकानि! एतेषां निमित्तं, पुनः टिप्पणीपुस्तकानां निमित्तं च धनं व्ययीकर्तुं सामान्याः पालकाः प्रायः न शक्नुवन्ति। बालाश्च महान्तं पुस्तक-टिप्पणीपुस्तकभारं महता श्रमेण स्कन्धाभ्यां वहन्तः भृत्यसदृशतां स्मारयन्ति।

चिन्तकाः शिक्षणतज्ज्ञाः च बहवः बालानां क्लेशविषये विचारं कठोरैः एव शब्दैः प्रकटितवन्तः। वस्तुतः तु तादृशैः परीक्षापद्धतिविषये शिक्षणनीतिविषये च सगाम्भीर्यं चिन्तयित्वा योग्यः मार्गः अन्वेष्टव्यः, येन च बालाः शालागमनात् विमुखाः न भवेयुः।

सम्पुटः–१०　　सप्टम्बर्–१९९३　　सञ्चिका–६

प्रतिकृतिमूल्यं रू. ४-००　*　वार्षिकं ग्राहकशुल्कं रू. ४८-००



# शक्ति संग्राम :।

MASTERS OF THE UNIVERSE

मार्गे प्रतिपदम् असाधुत्वं वः प्रत्यवतिष्ठते। किन्तु साधुत्वशक्तिः वः पक्षपातिनी। तत्रास्ति सुदूरं युष्माकं गन्तव्यं स्थानं ग्रेसल-दुर्गः। दुस्तरश्च पुनः विघ्नोपहतः मायासंवृतः इटर्निया-मार्गः। का पुनरत्र चिन्ता ? इह खलु सन्ति 'मास्टर्स ऑफ द यूनिवर्स-सहायाः। "अक्ष एक सखा चैकः किमतःपरमिष्यते। क्रीडानन्दाय पर्याप्तं भवेन्नित्यमिदं द्वयम्॥"

| | | | | |
|---|---|---|---|---|
| 1 | 2 ऑर्को 19 स्थानंप्रति नयति। | 3 | 4 कन्यः स्केलेटरस्य बिडालः अभिभवति। 1 स्थानं प्रत्यागन्तव्यम्। | 5 |
| 6 प्रिन्स एडम लीच नाम्नः दुष्टात्मनः परित्रायते। 11 स्थानंप्रति गन्तव्यम्। | 7 | 8 | 9 | 10 प्रकुपितः दुष्टात्मा। 5 स्थानंप्रति प्रत्याकर्षति। |
| 11 | 12 बैटल कैट ही-मैन पुरुषोत्तमस्य स्वामीनिष्ठं वाहनं। 25 स्थानंप्रति नयति। | 13 | 14 मेगा लेसर उद्भासमाना किरणशलाका युष्माकं मार्गं प्रकाशयति। 22 स्थानंप्रति गन्तव्यम्। | 15 |
| 16 | 17 | 18 स्केलेटर दुष्टात्म-स्वामी युष्माकं संकल्पान् उद्ध्वस्तान् करोति। 5 स्थानं प्रत्यागन्तव्यम् | 19 | 20 |
| 21 | 22 | 23 | 24 ही-मैन अस्य महाशक्तिः युष्मान् 30 स्थानंप्रति नयति। | 25 |
| 26 बीस्ट-मैन अयं दुष्टात्मनः सहायः अतो गमनात् युष्मान् निवर्तयति। 21 स्थानं प्रत्यागन्तव्यम् | 27 | 28 | 29 | 30 |

## अभिनन्दनम्

सांप्रतं शक्तिमन्तः भवन्तः।




अपूर्वः क्रीडारत्नाकरः

CUT HERE

वार्ताविशेषः–

# ५२ तमः आफ्रिकीयदेशः




गतस्य मे-मासस्य २८ तमे दिनाङ्के संयुक्तराष्ट्रसङ्घेन एरिट्रियादेशः १८२ तमसदस्यत्वेन अङ्गीकृतः। इतः चतुर्भ्यः दिनेभ्यः पूर्वं– तन्नाम मे-मासस्य २३ तमे दिनाङ्के भानुवासरे मध्यरात्रे एतस्य राजधान्याम् अस्मारानगरे सहस्रशः प्रजाः आनन्देन उत्साहेन च स्वातन्त्र्यगीतं गायन्तः नृत्यं कृतवन्तः।

तावत्पर्यन्तम् एरिट्रियादेशः इथियोपियादेशस्य अधीनः आसीत्। इदानीं पारतन्त्र्यपीडातः मुक्तिं प्राप्य स च देशः स्वातन्त्र्यानन्दसुखम् अनुभवति।

एरिट्रियादेशस्य इतिहासः सुदीर्घः अस्ति। सप्तमशतकान्तं यावत् प्रपञ्चे अतिप्राचीनत्वेन ख्यातस्य इथियोपियादेशस्य भागः आसीत् एषः एरिट्रियादेशः। १६ शतकस्य मध्यभागे एषः टर्कीदेशस्य वशं गतः।

१८८९ तमे वर्षे एषः इटलीदेशस्य अधीनः जातः। इटलीदेशस्य सर्वाधिकारी मुसलोनी १९३६ तमे वर्षे इथियोपियादेशं स्वायत्तीकर्तुम् इच्छन् एरिट्रियादेशं स्वयुद्धकार्याणां केन्द्रं कृतवान् आसीत्। तदा पदच्युतिं प्राप्य चक्रवर्ती हेली सेलास्सी इंग्लेण्ड्देशं शरणं गतः। १९३९ तमे वर्षे आरब्धस्य द्वितीयजागतिकयुद्धस्य सन्दर्भे मित्रराष्ट्राणि इथियोपियादेशं बन्धविमुक्तं कृत्वा चक्रवर्तिने अर्पितवन्तः। १९४१ तमे वर्षे एरिट्रियादेशः इथियोपियाधीनः सन् अपि स्वतन्त्राधिकारयुक्तः देशः जातः।

ततः अत्र बहूनि परिवर्तनानि जातानि। १९७४ तमे वर्षे प्रवृत्तस्य सैनिकविरोधस्य कारणतः यदा चक्रवर्ती पदच्युतः जातः तदा अत्र अन्तःकलहाः प्रवृद्धाः। देशस्य अधिकांशः भागः स्वातन्त्र्ययुद्धरतानां गेरिल्लाजनानाम् अधीनः जातः। इथियोपियासैनिकानां स्वातन्त्र्याकाङ्क्षिणां गेरिल्लाजनानां च मध्ये प्रायः ३० वर्षाणि यावत् निरन्तरं घोरं युद्धं प्रवृत्तम्।

अन्ते १९९१ तमे वर्षे मे-मासे २४ तमे दिनाङ्के राजधानी अस्मारानगरं "एरिट्रियन् पीपल्स् लिबरेषन् फ्रण्ड्" (इ.पि.एल्.एफ्.) अधीनं जातम्। एवं तदा एव स्वतन्त्रः सन् अपि एरिट्रियादेशः वर्षद्वयानन्तरं सर्वविधस्वतन्त्रत्वेन प्रकटितः अभवत्।

एप्रिल्मासे २३,२४,२५ दिनाङ्केषु प्रवृत्ते जनाभिप्रायसङ्ग्रहणकार्यक्रमे ९९.८% जनाः स्वाभिप्रायं प्रकटितवन्तः यत् इथियोपिया एरिट्रियादेशं परित्यज्य गच्छेत्, एरिट्रियादेशः स्वतन्त्रः स्यात् इति।

ततः एरिट्रियादेशे 'राष्ट्रियसभा' प्रवृत्ता। तत्र इस्सायिसस् अफे वोर्कीनीवर्यः अध्यक्षत्वेन चितः अभवत्। यश्च इ.पि.एल्.एफ्.संस्थायाः नायकः सन् स्वातन्त्र्यसम्पादनार्थं बहुधा कार्यं कृतवान् आसीत्।

१३४ सदस्यात्मिकायां राष्ट्रियसभायां देशस्य दशप्रदेशेभ्यः निर्वाचितानां ३० जनप्रतिनिधीनां, २० जनप्रमुखाणां, १० स्त्रीप्रतिनिधीनां च स्थानं भविष्यति।

एषा सभा चत्वारि वर्षाणि यावत् अधिकारे तिष्ठति। तदभ्यन्तरे एकां विशेषसमीतिम् आरचय्य तद्द्वारा आफ्रिकाखण्डीयस्य ५२ तमस्य स्वस्य नूतनं संविधानं रचनीयम् इति तत्र सङ्कल्पितम् अस्ति।

एरिट्रियादेशस्य जनसङ्ख्या ३५,००,००० तेषु क्रैस्ताः मुसल्माना च प्रायः समानसङ्ख्यया सन्ति।

अध्यक्षः अफेवोर्किनी स्वभाषणे—"पुनरुज्जीवनं प्राप्तवतः एतस्य नूतनस्य एरिट्रियादेशस्य अभिवृद्ध्यर्थं प्रपञ्चस्य सर्वे देशाः साहाय्यं कुर्युः" इति स्वस्य अपेक्षां प्रकटितवान् अस्ति।

अन्तर्युद्धे महासाहसभावेन कार्यं कृतवान् २८ वर्षीयः साद् अहम्मद् मे-मासस्य २३ दिनाङ्के एरिट्रियादेशस्य नूतनपताकाम् ऐदम्प्राथम्येन उड्डायितवान्। धूसरवर्णीयम् ऊरुकं, प्लास्टिक्पादरक्षां, शिरस्त्रं च धृतवान् सः तत्सन्दर्भे उक्तवान् यत् एतस्य शुभसन्दर्भस्य निमित्तं मया अष्ट वर्षाणि यावत् निरन्तरयुद्धं कृतम्। एतत् दिनम् अभिमानावहम् आनन्ददायकं च अस्ति इति।




# मैत्रीज्ञानम्

मदनपुरनामके ग्रामे आत्मारामः नाम कश्चित् आसीत्। सः मधुरं भाषते स्म। सर्वेषां साहाय्यं करोति स्म अपि। अतः सर्वजनप्रियता सम्पादिता आसीत् तेन। किन्तु यदा तस्य विवाहः जातः तदा एतस्याः प्रवृत्तेः भङ्गप्रसङ्गः आगतः। यतः पत्नी ईश्वरी सर्वैः सह मेलनं न इच्छति स्म। सर्वत्र अपि तया दोषाः एव दृश्यन्ते स्म। एतावदेव न, सा परमकृपणा अपि आसीत्। पत्न्याः एतेषां दुर्गुणानां कारणतः आत्मारामस्य व्यवहारेषु विघ्नाः भवन्ति स्म। पत्न्याः स्वभावे परिवर्तनं कथं करणीयम् इति सदा चिन्तयति स्म आत्मारामः।

दिवाकरः आत्मारामस्य मित्रम्। कदाचित् सः कस्यचित् कार्यस्य निमित्तं तं ग्रामम् आगतः आत्मारामस्य गृहम् आगत्य उक्तवान्– "मित्र! कथम् अस्ति भवान्? वस्तुतः तु पार्श्वग्रामे मम कार्यम् अस्ति। भवता सह सप्ताहं यावत् वासः करणीयः इति उद्देशेन अहम् अत्र आगतवान्। अहो, तानि बाल्यस्य दिनानि अविस्मरणीयानि आसन्!" इति। बाल्ये तयोः दृढतरा मैत्री आसीत्। दिवाकरः धनिककुले जातः आसीत्। अतः सः बहुधा आत्मारामस्य साहाय्यं कृतवान् आसीत् अपि। दिवाकरः इदानीं नगरे वसन् वाणिज्येन कोट्यधीशत्वं प्राप्तवान् आसीत्।

दिवाकरस्य आगमनम् ईश्वर्यै न अरोचत। सा पतिम् उक्तवती– "कोट्यधीशः सः उत्तमे वसतिगृहे वसेत् खलु? तस्य अत्र वासेच्छा एव प्रदर्शयति यत् सः महाकृपणः इति। मैत्रीव्याजेन अत्र वासं कृत्वा धनव्ययं न्यूनीकर्तुम् इच्छति सः। द्वित्राणि दिनानि चेत् 'अस्तु' इति वक्तुं शक्येत। किन्तु सप्ताहं यावत् स्थितिः चेत्



को वा तस्य अन्नपानादिव्यवस्थां कुर्यात्? मया तु एतत् सर्वथा न शक्यते" इति।

'यदि रुचिकरः पाकः क्रियेत तर्हि एषः इतोऽपि बहूनि दिनानि तिष्ठेत्' इति आलोच्य ईश्वरी प्रतिदिनम् अरुचिकरं पाकम् एव करोति स्म। कदाचित् जलमयं तक्रमात्रं परिवेषयति स्म सा, नान्यत् किमपि।

किन्तु दिवाकरः एतादृशं न परिगणितवान् एव। यत् परिविष्यते तत् सन्तोषेण खादति स्म सः। अतिसामान्यः पाकः परिविष्यमाणः अस्ति इत्यंशः एव न लक्षितः तेन। आदिनं सः बाह्यकार्येषु व्यग्रः भवति स्म। सायं प्रत्यागतः सः आत्मारामेण सह मध्यरात्रपर्यन्तं वार्तालापं करोति स्म। वार्तालापस्य मध्ये महान्तम् आनन्दम् अनुभवन्तौ तौ उच्चैः हसतः स्म। एतादृशं श्रुत्वा ईश्वरी मनसि एव कोपं प्राप्नोति स्म।

निर्गमनदिने दिवाकरः ईश्वरीम् उद्दिश्य– "भगिनि! व्यवहारक्लेशान् विस्मृत्य बाल्यदिनस्मरणेन सुखम् अनुभोक्तव्यम् इति उद्देशेन अहम् अत्र आगत्य वासं कृतवान्। एतेन भवत्याः क्लेशः जातः स्यात्। मित्राय दातुम् एकम् उपायनम् आनीतवान् अस्मि। इदानीम् अहं चिन्तयामि– तत् उपायनं प्राप्तुं भवती एव अर्हा इति। अतः एतत् स्वीकरोतु तावत्" इति उक्त्वा एकं वज्रखचितम् अङ्गुलीयकं तस्यै दत्तवान्। अमूल्यम् एतत् उपायनं दृष्टवत्याः ईश्वर्याः महत् आश्चर्यम्!

दिवाकरः आत्मारामं पश्यन् पुनः उक्तवान्– "अस्माकं नगरे दर्शनयोग्यानि बहूनि स्थलानि सन्ति। मम साग्रहं निवेदनं यत् भवद्भ्याम् उभाभ्याम् अपि नगरम् आगत्य मम आतिथ्यं स्वीकरणीयम् इति। यदि भवतोः आगमनं भवेत् तर्हि अहम् आत्मानं धन्यं मन्ये" इति।

मित्रस्य गमनस्य अनन्तरम् आत्मारामः पत्नीम् उक्तवान्– "मम मित्रस्य आगमनं भवत्याः सन्तोषाय न इति अहं जानामि। भवत्याः असन्तोषप्रकटनक्रमः अपि अवलोकितः मया। इदानीं ज्ञातं स्यात् खलु– आवयोः मैत्री कीदृशी इति?" इतिं।

तदा ईश्वरी तिरस्कारभावनया उक्तवती– "नितरां मूर्खः भवान्। भवतः मित्रं दिवाकरः महाकृपणः वाणिज्यदृष्टिमान् च। पार्श्वग्रामे धनिकानां वासार्थं योग्यम् इन्द्रभवनसदृशम् अतिथिगृहम् अस्ति। यदि तेन तत्र वासः कृतः स्यात् तर्हि महान् व्ययः अभविष्यत्। अतः बुद्धिमान् सः अत्र वासं कृतवान्। विना व्ययं कार्यं साधितवान् सः। वज्राङ्गुलीयकदानं तदीयां मैत्रीं द्योतयति इति भवान् चिन्तयति। वस्तुतः तु भोजनार्थं यः व्ययः जातः तदर्थम् एतत् दत्तं तेन" इति।

पत्न्याः बोधनं व्यर्थम् इति जानाति स्म आत्मारामः। ततः केषाञ्चित् दिनानाम् अनन्तरम् ईश्वरी अस्वस्था जाता। वैद्यः चिकित्सायाः अनन्तरं सूचितवान्– "रोगः तु इदानीम् उपशान्तः। किन्तु रोगस्य पुनरागमनस्य सम्भावना अपि अस्ति। अतः नगरे स्थितस्य उमाकान्तनामकस्य वैद्यस्य दर्शनं वरम्" इति।

"एतत् तु युक्तम् एव। एतद्व्याजेन वा नगरं गत्वा मित्रस्य गृहे कानिचन दिनानि स्थित्वा आगच्छाम" इति उत्साहेन पत्नीम् उक्तवान् आत्मारामः।

"मित्रगृहे वासः सर्वथा मास्तु। अन्यत्र कुत्रापि वासं कृत्वा कार्यं समाप्य प्रत्यागच्छाव" इति उक्तवती ईश्वरी।

तदा खेदेन पत्नीम् उक्तवान् आत्मारामः– "महता आग्रहेण सः स्वगृहं प्रति आहूतवान् इति भवती विस्मृतवती वा?" इति।



"सः स्वगृहं प्रति किमर्थम् आहूतवान् इति भवान् जानाति वा? पूर्वं दत्तस्य वज्राङ्गुलीयकस्य यत् मूल्यं तावत् धनं कथमपि अस्मत्तः प्राप्तव्यम् इति तस्य उद्देशः। वयं द्वित्राणि दिनानि तिष्ठेम। प्रत्यागमनसमये तेन यथा कृतं तथैव अस्माभिः अपि उपायनं दातव्यं भवति एव। अतः अन्यत्र कुत्रापि वासं कृत्वा कार्यं समाप्य प्रत्यागच्छाव" इति उक्तवती ईश्वरी।

पत्न्याः एतादृशं चिन्तनम् आत्मारामाय न रोचते स्म। तथापि अनन्यगतिकतया सः मौनं स्थितवान्। ततः तौ नगरं गतवन्तौ।



सामान्ये स्थले वासं कृत्वा वैद्यं दृष्ट्वा चिकित्सां कारितवन्तौ। एतदभ्यन्तरे एव नगरे दर्शनीयानि स्थलानि दृष्टवन्तौ च।

ततः प्रत्यागमनसमये आत्मारामः पत्नीम् उक्तवान्– "पश्यतु, नगरे वासात् एतावता एव द्विशतं रूप्यकाणि व्ययितानि। यदि मित्रस्य दिवाकरस्य गृहे वासः कृतः स्यात् तर्हि एतावता धनेन एव तस्मै उत्तमम् उपायनं दातुं शक्यम् अभविष्यत्। दिवाकरः उमाकान्तः च आत्मीयौ स्नेहितौ इति मया श्रुतम्। अतः दिवाकरेण सह गत्वा उमाकान्तः दृष्टः चेत् परिणामः इतोऽपि उत्तमः अभविष्यत्। नगरं प्रति आवयोः आगमनम् एतावता एव दिवाकरेण ज्ञातं स्यात्। न जाने, एतेन तस्य कियत् दुःखं जातं स्यात् इति" इति।

तदा ईश्वरी उक्तवती– "अतिथयः गृहं प्रति न आगताः चेत् धनसञ्चयः एव भवति इत्यतः जनाः सन्तोषम् एव प्राप्नुवन्ति। यदि वयम् इदानीं दिवाकरस्य गृहं गतवन्तः स्याम तदा पुनरपि कदाचित् तेन अस्मद्गृहं प्रति आगन्तव्यं भवेत्। तदा तु, पूर्वं यथा दत्तं तथैव इदानीम् अपि महामूल्यस्य एव उपायनं कथं वा दातुं शक्येत? अतः मैत्री छिन्ना चेत् मित्रस्य सन्तोषः एव भवेत्" इति।

"दिवाकरम् अहं बाल्यात् अपि जानामि खलु? आत्मीयेभ्यः सः सर्वदा अपि अमूल्यम् उपायनम् एव ददाति। एषः तस्य स्वभावः। किम् अधिककथनेन? यावत् उक्तं चेदपि भवती वस्तुस्थितिम् अवगन्तुं न शक्नोति" इति खेदेन एव उक्तवान् आत्मारामः।

ततः केषाञ्चित् दिनानाम् अनन्तरम् आत्मारामेण ज्ञातं यत् दिवाकरः कार्यार्थं पार्श्वग्रामम् आगतः अस्ति, अतिथिगृहे निवसति च इति। अतः सः मित्रं द्रष्टुं गन्तुम् उद्युक्तः। तदा पत्युः गमनं निवारयन्ती ईश्वरी उक्तवती– "पश्यतु, मया यथा चिन्तितं तथैव प्रवृत्तम्। मित्रस्य स्वभावः इदानीं वा ज्ञातः खलु? भवान् इदानीं तं मा पश्यतु" इति। किन्तु ततः चतुर्णां दिनानाम् अनन्तरं दिवाकरः आत्मारामस्य गृहम् आगतः एव। एतत् दृष्टवत्याः ईश्वर्याः महत्

आश्चर्यम्। दिवाकरः आक्षेपयुक्तेन स्वरेण आत्मारामम् उक्तवान्– "मित्र! भवन्तौ नगरम् आगत्य अपि मम गृहे न स्थितवन्तौ इति तु महते खेदाय। अतः एव एतस्मिन् सन्दर्भे अहं भवद्गृहं वासार्थं न आगतः" इति।

"सामान्ये सन्दर्भे चेत् आवाम् अवश्यं भवतः गृहम् एव आगच्छेव। किन्तु तदा मम अनारोग्यम् आसीत् खलु? तादृशस्थितौ तत्र आगमनम् उचितं न इति विचिन्त्य आवां न आगतौ" इति स्वव्यवहारं समर्थितवती ईश्वरी।

"किं व्याजकथनेन? अचिरात् एव भवद्भ्यां मद्गृहे वासार्थम् एव नगरम् आगन्तव्यम्। दश दिनानि स्थातव्यं च। तदा एव अहं भवन्तौ क्षमितुं शक्नुयाम्" इति उक्तवान् दिवाकरः।

आत्मारामः ईश्वरी च 'अस्तु' इति वदन्तौ अङ्गीकारपूर्वकं शिरः चालितवन्तौ। तदा दिवाकरः हसन्– "अहं भवद्भ्यां सह कलहं कर्तुम् आगतः इति चिन्तितवन्तौ वा भवन्तौ? मम आगमनस्य वास्तविकः उद्देशः अन्यः एव। भवद्ग्रामसमीपम् आगतः अहम् अल्पम् उपायनं दत्त्वा गच्छामि इति उद्देशेन अत्र आगतः" इति उक्त्वा आत्मारामाय एकं वज्राङ्गुलीयकं दत्त्वा ततः निर्गतवान्।

उपायनं दातव्यं भवेत् इति उद्देशेन दिवाकरस्य गृहं प्रति गमनं निराकृतवती आसीत् ईश्वरी। किन्तु दिवाकरः ईश्वर्याः गृहे अतिष्ठन् अपि पुनरपि उपायनं दत्त्वा गतवान् आसीत्। एवं दृढमैत्रीं प्रमाणीकुर्वन् स्वश्रेष्ठतां निरूपितवान् आसीत् दिवाकरः। 'एतादृशस्य पुरतः मया अल्पता प्रदर्शिता' इति अवगतवती ईश्वरी। एतदर्थं लज्जा पश्चात्तापश्चापि अनुभूतः तया।

ततः केषाञ्चित् दिनानाम् अनन्तरम् ईश्वरी आत्मारामः च नगरं गत्वा दिवाकरस्य गृहे स्थित्वा सन्तोषं प्राप्य प्रत्यागतौ। गमनसमये प्रीतिद्योतकानि उपायनानि नीतवती आसीत् ईश्वरी।



# अनुमतिपत्रम्

हेरम्बपुरस्य अरण्येषु मृगयासक्तानां सङ्ख्या अधिका जाता आसीत्। एतेन वन्यपशूनां सङ्ख्यायां विशेषह्रासः जातः। एतम् अंशं ज्ञात्वा राजा विद्याधरः आज्ञां कृतवान् यत् अनुमतिपत्रं विना अरण्येषु मृगाणां मारणं निषिद्धम् इति। 'ये नियमोल्लङ्घनं कुर्वन्ति तेषां कठोरदण्डनं भविष्यति' इत्यपि आज्ञां कृतवान् आसीत् सः।

कदाचित् उभौ मृगयारतौ आस्ताम्। तदा अकस्मात् उभौ वन्यरक्षकाधिकारिणौ तत्र आगतौ। तौ एतौ मृगयारतौ उक्तवन्तौ यत् राज्ञः मुद्रया अङ्कितम् अनुमतिपत्रं प्रदर्शयताम् इति। एतत् श्रुत्वा एकः ततः धावितवान्। अधिकारिणौ अपरं तत्रैव परित्यज्य धावन्तम् अनुसृत्य धावितवन्तौ।

अरण्ये बहुदूरं धावनानन्तरं तौ अधिकारिणौ तं धावन्तं जनं गृहीतवन्तौ। सः पुरुषः धावनायासकारणतः दीर्घं निःश्वसन् वस्त्रे निहितम् अनुमतिपत्रं बहिः आनीय अधिकारिभ्यः प्रदर्शितवान्।

राजमुद्रया सहितं तत् अनुमतिपत्रं सम्यक् परीक्ष्य कश्चन अधिकारी कोपेन एतं पृष्टवान्— "भोः, अविवेकिन्! अनुमतिपत्रं स्वसमीपे स्थापयन् अपि भवान् किमर्थम् आवाम् एतावद्दूरं धावितवान्?" इति।

तदा सः मृगयासक्तः जनः शान्तस्वरेण उक्तवान्— "मम समीपे तु अनुमतिपत्रम् अस्ति। किन्तु मम मित्रस्य समीपे तत् न आसीत्" इति।





# विचित्रं पुष्पम्

४

(माणिक्यपुर्याः दक्षिणदिशि समुद्रतीरे स्थिताः केचन ग्रामाः भूमिसमाः जाताः। एतस्य परिणामतः प्रजासु महती भीतिः उत्पन्ना। स्वप्राणरक्षणार्थं काश्चन प्रजाः राजधानीम् आगताः। राजा, राजकुमारी, सेनाधिपतिः च तासां निमित्तं योग्यव्यवस्थायाः उपकल्पनार्थम् अहोरात्रं कार्यं कृतवन्तः। समुद्रतीरं गत्वा प्रत्यागतः दलपतिः सेनाधिपतिं निवेदितवान् यत् कश्चन राक्षसः एतस्य नाशस्य हेतुः इति। सः घोरः राक्षसः मध्यरात्रे समुद्रमध्यात् आगच्छति इत्यपि निवेदितवान् सः। तदनन्तरम्....)

सेनाधिपतिः गम्भीरसिंहः साक्षात् राजप्रासादं गतवान्। दलपतिना वीरसिंहेन यद्यत् उक्तं तत्सर्वं राजानं विस्तरेण निवेदितवान् सः।

सर्वं श्रुत्वा राजा प्रतापवर्मा उक्तवान्– "किम् उक्तं भवता? राक्षसपीडा इति? राक्षसाः पुराणकाले आसन् इति श्रूयते। इतिहासे तु कुत्रापि राक्षसजातेः उल्लेखः न दृश्यते। एतत् तु महते आश्चर्याय यत् वर्तमानकाले राक्षसस्य उपस्थितिः सम्भाव्यते इति। अहं तु चिन्तयामि– राक्षसस्य स्थितिः असम्भवा इति। यैः राक्षसः प्रत्यक्षं दृष्टः तादृशेषु कोऽपि अत्र न आगतः। सैनिकैः यत् उक्तं तत् दलपतिना निवेदितम्। अतः एषः विषयः विश्वासार्हः वा न वा इति तु चिन्तनीयम् एव" इति।



"आम्। दलपतिः वीरसिंहः भूमिसमतां गतान् ग्रामान् केवलं दृष्टवान्, न तु राक्षसं प्रत्यक्षम्। किन्तु एतत् तु निश्चितं यत् तेषां ग्रामाणां नाशस्य कारणं प्राकृतिकः विकोपः तु सर्वथा न इति। राक्षसः दृष्टः इति सैनिकाः यत् उक्तवन्तः तत् निराधारं न स्यात् इति भाति मम। अतः घटनास्थलं गत्वा प्रत्यक्षं परिशील्य निर्णेतव्यं भवति। यदि भवतः अनुज्ञा स्यात् तर्हि अहं तं प्रदेशं स्वयं गत्वा सर्वं परिशील्य वस्तुस्थितिं ज्ञात्वा आगच्छेयम्" इति सेनाधिपतिः गम्भीरसिंहः महाराजं सविनयं निवेदितवान्।

राजा क्षणकालं विचिन्त्य उक्तवान्– "अस्तु, भवान् तत्र गत्वा आगच्छतु। अहम् अपि राजगुरुणा गौरीनाथवर्येण सह समालोच्य अग्रे किं करणीयम् इति विषये चिन्तयिष्यामि" इति।

"यथाज्ञापयति प्रभुः" इति उक्त्वा राजानं नमस्कृत्य सेनाधिपतिः प्रासादस्य पश्चिमपार्श्वं गतवान्, यत्र निराश्रयाणां त्रासः कल्पितः आसीत्।

सेनाधिपतिं दृष्ट्वा सैनिकाः ससम्भ्रमं नमस्कारं कृत्वा– "अत्र सर्वं सम्यक् प्रचलत् अस्ति। काऽपि विशेषसमस्या नास्ति। निराश्रयानां वसत्यादिव्यवस्थां परिशीलयितुं सद्यः एव राजकुमारी अपि आगता अस्ति" इति निवेदितवन्तः।

गम्भीरसिंहः अश्वात् अवतीर्य शिलास्तम्भानाम् आधारेण निर्मितं मण्डपं प्रविश्य तस्य मध्यभागं गतवान्। तावता सामान्यवेषं धृतवती राजकुमारी परिचारिकाभ्यां सह पार्श्वप्रकोष्ठात् बहिः आगतवती।

सेनाधिपतिं दृष्ट्वा सा उक्तवती– "आहार-वसत्यादिषु विषयेषु अत्र अव्यवस्था काऽपि नास्ति। शिशूनाम् आरोग्यं यथा न नश्येत् तथा अपि विशेषजागरूकता आश्रिता अत्र। शिशूनाम् आरोग्यविषये विशेषावधानं भवतु इति राजवैद्यः मया प्रार्थितः अपि" इति।

"राजकुमारि! भवत्याः चिन्तनं युक्तम् अस्ति। शिशूनाम् आरोग्यस्य विषये

अवधानम् अत्यावश्यकम्। प्रशसांर्हा कार्ययोजना भवत्याः" इति उक्तवान् सेनाधिपतिः।

तदा राजकुमारी पुनः उक्तवती– "अत्र सर्वाः स्त्रियः सन्तोषेण सन्ति। किन्तु तासां चिन्ता तु पतिविषये। अतः अन्यत्र वसन्तः पुरुषाः यदि कदाचित् एकवारं वा आगच्छेयुः तर्हि पति-पत्नीपुत्राणां मेलनं भवेत्। सर्वेषां मनः च निश्चिन्तं स्यात्" इति।

"अस्तु तावत्। श्वः सायं केषाञ्चित् पुरुषाणां प्रेषणार्थं व्यवस्थां करिष्यामि। ततः गणशः अन्येषां प्रेषणार्थं व्यवस्था भविष्यति" इति उक्त्वा सेनाधिपतिः अन्यशिबिरं प्रति गतवान्।

अत्रान्तरे दलपतिः वीरसिंहः सेनाधिपतेः अभिमुखम् आगत्य विनयेन नमस्कृत्य उक्तवान्– "अद्य अन्ये केचन सैनिकाः व्रणिताः सन्तः प्रत्यागताः। अस्माकं वैद्याः तेषां चिकित्सायां तत्पराः सन्ति। किन्तु ते भीताः सैनिकाः पुनः पुनः राक्षसनाम स्मरन्तः कम्पन्ते" इति।

"यदि तेषां वचनं मिथ्या न स्यात् तर्हि एतत् तु निश्चितं यत् अस्माकं राज्यं विपत्तिकूपे पतितम् इति। तस्य राक्षसस्य सम्मुखीकरणार्थम् अस्माभिः प्रायः अन्यराजानां साहाय्यं स्वीकरणीयं भवेत् अपि। यथाकथमपि भवतु, मया तत्र गत्वा तस्य राक्षसस्य विषये सर्वं प्रत्यक्षं द्रष्टव्यम्। अतः अहम् अचिरात् एव दक्षिणप्रान्तं प्रति गमिष्यामि। भवता अपि मया सह





आगन्तव्यम्। अतः एतदर्थं सन्नाहः भवतु इति उक्तवान् सेनाधिपतिः।

तदा दलपतिः पृष्टवान् – "किम् अस्माभिः सेना अपि नेतव्या भवेत्?" इति।

"सेना नेतव्या नास्ति। भवता सह समर्थाः त्रयः सैनिकाः भवन्तु। रात्रौ यत् रक्षणकार्यं प्रचलति तत् तु यथापूर्वं प्रचलतु नाम। अस्माकं गमनं केनापि अन्येन ज्ञातं न भवेत्" इति सूचितवान् सेनाधिपतिः।

तस्मिन् दिने अपराह्णे सेनाधिपतिः, दलपतिः, त्रयः सैनिकाः च दक्षिणप्रान्तम् उद्दिश्य गतवन्तः। सायङ्काले ते समुद्रतीरं प्राप्तवन्तः। तत्र तैः, ग्रामाणां सर्वनाशः वृक्षगुल्मादीनां ध्वंसः च प्रत्यक्षं दृष्टः। तस्य प्रदेशस्य रक्षणार्थं नियुक्ताः सैनिकाः एतान् स्वागतीकृतवन्तः।

सेनाधिपतिः दलपतिः च किमपि अवदन्तौ अग्रे गतवन्तौ। पदचिह्नादिकं किमपि दृश्येत वा इति तत्र सर्वत्र सुसूक्ष्मं परिशीलितवन्तौ तौ। एवं परिशीलनात् ताभ्यां, आकृष्य नयनममये यत् चिह्नं भवति तादृशं चिह्नं कुत्रचित् दृष्टम्। किञ्चित् अग्रे तस्य एव चिह्नस्य पार्श्वद्वयस्य रेखा स्फुटतया दृष्टा। तत् रेखाद्वयं समुद्रतीरात् बहुदूरं यावत् दृष्टम्। तत् रेखाद्वयं समानान्तरयुक्तम् आसीत्, उत्तरदिशि गमनं सूचयति स्म च। तत् रेखाद्वयम् अनुसरन्तौ तौ समुद्रतीरसमीपं गतवन्तौ। तत्र आर्द्रे सिकताप्रदेशे सुविशालानि कानिचन पदचिह्नानि दृष्टानि। तानि दृष्ट्वा दलपतिः सेनाधिपतिम् उक्तवान् – "समुद्रात् कश्चन जन्तुः आगतः इत्यत्र सन्देहः एव न अवशिष्टः। तस्य जन्तोः आकारः तु कल्पनातीतः इत्यपि पदचिह्नदर्शनात् ऊह्यते" इति।

"आम्। भवता सम्यक् एव उक्तम्। समुद्रात् निर्गतः सः विचित्रः जन्तुः पुनः समुद्रम् एव प्रविष्टवान् अपि स्यात् खलु? समुद्रात् निर्गतस्य तस्य पदचिह्नानि अस्माभिः दृष्टानि। समुद्रं प्रति गमनस्य पदचिह्नानि कुत्रापि दृश्यन्ते वा?" इति पृष्टवान् सेनाधिपतिः।

"तत् तु परिशीलनीयम्" इति वदन् दलपतिः पुनरपि पदचिह्नादीनां परिशीलने मग्नः जातः। अल्पे एव काले सर्वत्र अन्धकारः प्रसृतः। तौ निश्चितवन्तौ यत् दूरे एव स्थित्वा रक्षणकार्ये निरतानां सैनिकानां कार्यशैली परिशीलनीया इति।

चतुर्थप्रहरस्य आरम्भः जातः। तदा सेनाधिपतिः दृष्टवान् यत् उत्तरदिशि पर्वताकारः कश्चन आकारः कम्पमानः अस्ति इति। स च आकारः समुद्रतीरदिशि मन्दम् आगच्छन् दृष्टः तेन। सः दलपतये तम् आकारं प्रदर्शितवान्। स च आकारः इतस्ततः वलन् मन्दम् अग्रे आगच्छन् आसीत्। एवम् आगच्छतः तस्य शिरः वृक्षाणाम् अपेक्षया अपि उपरि दृश्यते स्म। अल्पे एव काले तस्य आकारस्य स्वरूपं स्फुटं जातम्। तस्य पादौ तु तालवृक्षौ इव आस्ताम्। हस्तौ अजगरौ इव भासेते स्म। अग्निगोलके इव नेत्रे रक्तवर्णतया भासेते स्म। मुखं च गुहासदृशम् आसीत्। तीक्ष्णाः दीर्घाः दंष्ट्राः तस्य आकारस्य घोरतां वर्धयन्ति स्म। घोराकारस्य तस्य दर्शनात् धीरस्य सेनाधिपतेः हृदये अपि भीतिजनितानि कम्पनानि उत्पन्नानि।

एकैकं पदं स्थापयन् सः राक्षसः यथा यथा अग्रे आगच्छति तथा तथा भूमिः कम्पते स्म। तस्य पदतलस्य अधः स्थिताः महान्तः अपि वृक्षाः भूमिसमाः भवन्ति स्म। एवं स्थिते



गुल्मादीनां का कथा? तस्य राक्षसस्य उष्णः श्वासः झञ्झावातः इव वाति स्म। 'एतस्य पादाघातकारणतः ग्रामः गृहाणि च भूमिसमत्वं प्राप्नुवन् इत्यत्र न हि आश्चर्यम्। वस्तुतः तु नगरम् अपि एतस्य पादाघातकारणतः नाशं प्राप्नुयात्। अहो घोरं स्वरूपम् एतस्य!' इति आलोचितवान् सेनाधिपतिः।

सेनाधिपतिः दलपतिः चापि तस्य राक्षसस्य मार्गे कमपि विघ्नं न कृतवन्तौ। ततः अपसृत्य आत्मानं रक्षितवन्तौ तौ। सौभाग्यवशात् कोऽपि सैनिकः अपि तस्य पादतलस्य अधः न आसीत्।

पूर्वस्यां दिशि यदा सूर्यकिरणानाम्



उदयस्य चिह्नानि दृष्टानि तदा स च राक्षसः समुद्रगर्भे कुत्रापि निलीनः जातः।

सेनाधिपतिः पर्वताकारस्य राक्षसस्य दर्शनात् एव ज्ञातवान् यत् मानवमात्रेण एतस्य सम्मुखीकरणम् असाध्यम् इति। तेन एतदपि निश्चितं यत् सूर्योदयात् पूर्वं स च राक्षसः समुद्रं प्रविशति इति। मध्यरात्रसमये समुद्रात् तस्य निर्गमनम् इति तु तेन पूर्वम् एव सैनिकानां द्वारा ज्ञातम् आसीत्। राक्षसस्य सम्मुखीकरणस्य चिन्तनम् एव असाध्यम् इत्यतः आत्मना सह स्थितान् त्रीन् सैनिकान् राजधानीं प्रति प्रेषितवान् सेनाधिपतिः।

रक्षणकार्ये रतेषु सैनिकेषु कोऽपि तत्र न दृश्यते स्म। एतम् अंशं लक्षितवान् सेनाधिपतिः निश्चितवान् यत् राक्षसस्य पादतलस्य अधः स्थिताः ते भूमौ निलीनाः सन्तः परलोकं गताः इति।

"तस्य राक्षसस्य सम्मुखीकरणार्थं प्रयत्नः सैनिकानां नाशमात्राय भवेत् इति भाति मम। एतादृशे सन्दर्भे, तस्य राक्षसस्य दृष्टिः नगरदिशि यथा न पतेत्, नगरम् उद्दिश्य सः यथा न आगच्छेत् तथा कर्तुं कस्यचित् उपायस्य चिन्तनं वरं भवेत्" इति विनयेन सेनाधिपतिम् उक्तवान् दलपतिः।

"आम्। सम्यक् एव चिन्तयित्वा उक्तं भवता। स च राक्षसः नगरं यथा न प्रविशेत् तथा किमपि त्वरया करणीयम्। एतदर्थं कापि योजना त्वरया चिन्तनीया। ततः तस्य राक्षसस्य नाशार्थम् अपि कोऽपि उपायः चिन्तनीयः। सद्यः वयं राजधानीं प्रतिगत्य राजानं सर्वं निवेदयाम। अद्य रात्रौ पुनरपि अत्र रक्षणार्थं सैनिकानां नियोजनं मास्तु एव। श्वः अत्र आगत्य भवान् तस्य राक्षसस्य पदचिह्नादिविषये परिशीलनं करोतु। इदानीं राजधानीं प्रतिगच्छाव तावत्" इति उक्त्वा सेनाधिपतिः अश्वम् आरूढवान्। दलपतिः अपि तम् अनुकुर्वन् अश्वम् आरुह्य उपविष्टवान्। ततः तौ वेगेन निर्गत्य राजधानीं प्राप्तवन्तौ।

सेनाधिपतिः यदा राजप्रासादं प्रविष्टवान् तदा महाराजः राजगुरुणा गौरीनाथेन सह समालोचनं कुर्वन् आसीत्।

स: सेनाधिपतिं दृष्ट्वा महता कुतूहलेन पृष्टवान्– "भवता स: विचित्र: जन्तु: दृष्ट: वा?" इति।

"आं श्रीमन्! मया स: राक्षस: प्रत्यक्षं दृष्ट:। सैनिकानां वचनं मिथ्या न" इति उक्त्वा दक्षिणप्रान्तस्थे समुद्रतीरे दृष्टं सर्वं निवेद्य– "स: राक्षस: मध्यरात्रसमये समुद्रमध्यात् बहि: आगत्य उत्तरदिशि गच्छति। सूर्योदयात् पूर्वं समुद्रे विलीन: भवति च। तस्य संहारार्थम् अस्मासु कस्यापि सामर्थ्यं नास्ति इत्यत्र नास्ति सन्देह:" इति उक्तवान् सेनाधिपति:।

सर्वं श्रुत्वा राजा क्षणकालं गाम्भीर्येण चिन्तनं कृतवान्– 'अकस्मात् मम राज्यस्य एतादृशी कष्टकरी परिस्थिति: किमर्थम् आगता? प्रशान्ते मम राज्ये एतादृशी घटना किमर्थं सम्भवति? मया, मम सहकारिभि:, मत्परिवारसदस्यै: वा कदापि अनौचित्येन अधर्मवृत्त्या वा न व्यवहृतम्। एवं स्थिते अपि एतादृशी विपत् किमर्थम्? एष: राक्षस: केन उद्देशेन ग्रामान् जनान् च नाशयन् अस्ति? एतस्य राक्षसस्य पृष्ठभूमिका का स्यात्?' इति।

तदा राजगुरु: उक्तवान्– "महाराज! राजकुलोत्पन्न: चन्द्रकेतु: अर्चकस्य कुलश्रेष्ठस्य शापं प्राप्तवान् आसीत् खलु? मम तु ऊहा यत् स: चन्द्रकेतु: एव एवं राक्षसरूपं प्राप्य इदानीं सञ्चरन् स्यात् इति।



चिरकालानन्तरं शताब्दिकापुष्पं यदा विकसितं जातं तदैव राक्षसस्य दर्शनं भवत् अस्ति इत्येतत् मम ऊहां दृढीकरोति। अन्यच्च शताब्दिकापुष्पम् उत्तरदिशि खलु विकसितम्? एष: राक्षस: अपि तस्यां दिशि एव गच्छति। तन्नाम स: तेन पुष्पेण आकृष्ट: सन् एवं व्यवहरति इति अहं भावयामि। इदानीं शताब्दिकापुष्पम् एव अस्मान् रक्षेत्" इति।

"तच्च पुष्पं हानिकारकम् इति सद्य: एव उक्तम् आसीत् भवता। एवं स्थिते तदेव पुष्पं कथं वा अस्माकं रक्षणं भवेत्? विचित्रम् इव भासते खलु भवत: वचनम्?" इति आश्चर्येण पृष्टवान् राजा।

"अर्चकस्य कुलश्रेष्ठस्य शापेन ग्रस्तः राक्षसरूपं प्राप्तः सः चन्द्रकेतुः अस्यां भूमौ न निवसेत् इति भाति मम। सः समुद्रमध्यात् आगच्छति इत्येतत्, मम वचनस्य पोषकम् अस्ति। विचित्रपुष्पात् आकृष्टः एव सः माणिक्यपुरीम् आगच्छन् अस्ति। अतः तत् विचित्रपुष्पं राक्षसस्य वासस्थानं समुद्रं प्रापयामः चेत् प्रायः एषा समस्या परिहृता भवेत्। किन्तु एतादृशं साहसकार्यं कर्तुं समर्थः कः अस्ति इति तु अन्वेष्टव्यम्" इति उक्तवान् राजगुरुः।

राजगुरोः वचनस्य श्रवणात् राजा वसन्तोत्सवदिने अपूर्वं पुष्पम् उपायनीकृतवन्तम् उत्तुङ्गं झटिति स्मृतवान्। स्ववासस्थलं शृङ्गमयपर्वतं प्रति आमन्त्रणं तेन यत् दत्तम् आसीत् तदपि स्मृतवान् राजा। 'एतत् कार्यं कर्तुं समर्थः तु उत्तुङ्गः एव। अतः निमन्त्रण-पुरस्कारव्याजेन तत्र गत्वा एतस्मिन् साहसकार्ये सः उत्तुङ्गः एव नियोजनीयः' इति आलोच्य राजा सेनाधिपतिं पश्यन् उक्तवान्– "श्वः एव अहं शृङ्गमयपर्वतम् उद्दिश्य प्रयाणं कर्तुम् इच्छामि। मया सह दलपतिः वीरसिंहः अपि आगच्छतु। सेनायाः, अन्यस्य कस्यापि जनस्य वा आगमनं मास्तु" इति।

ततः राजगुरुं पश्यन्– "गुरुवर्य! मम एतत् प्रयाणं सफलं यथा स्यात् तथा आशीर्वादेन अनुग्रहणीयः अहम्" इति उक्त्वा विनयेन शिरः अवनमय्य स्थितवान्।

"भवतः निर्णयः सर्वथा उचितः अस्ति। राजा सदापि राज्यस्य रक्षणार्थं, प्रजानां हितार्थं च प्राणान् अपि पणीकृत्य कार्ये प्रवर्तेत। अस्माकं कुलदेवतायाः कृपादृष्टिः भवतः उपरि अस्ति एव। अतः भवान् निश्चयेन सफलः भविष्यति। सर्वान् अपायान् नीत्वा विजयी भविष्यति" इति महाराजं वदन् महत्या प्रीत्या आशीर्वादं कृतवान् राजगुरुः गौरीनाथः।

–(अनुवर्तते)





# अजेयस्य पराजयः

यदि अहं सामान्यं वेतालं वशीकर्तुम् अपि न शक्नुयां तर्हि किं मम जीवितेन इति चिन्तयन् इव त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य वृक्षात् अधः आगत्य मौनं श्मशानाभिमुखं प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! भवतः निर्भयत्वं, परिश्रमशीलता, साहसप्रवृत्तिः इत्यादीनां विषये किं वदामि? कार्यसाधनेच्छा, असीमा सहनशक्तिः, दृढा सङ्कल्पशक्तिः चापि भवतः सन्ति। एवं गुणानाम् आकरः भवान्। किन्तु मम सन्देहः यत् सत्सु अपि एतेषु सद्गुणेषु, अन्तिमक्षणे भवान् लोभवशं गतः सर्वान् सद्गुणान् त्यजेत् इति। यतः एतादृशाः जनाः बहवः मया दृष्टाः। अत्र उदाहरणरूपेण वेदान्तिनः तपश्शक्तिसम्पन्नस्य अजेयनामकस्य कथां विस्तरेण श्रावयामि, यश्च

## वेतालकथा



राज्याकाङ्क्षालोभेन पतितः जातः। कथाश्रवणेन भवतः मार्गायासः अपि परिहृतः भवेत्। श्रद्धया शृणोतु तावत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा–

अरुणगिरिराज्यस्य राजा विक्रमसेनः। तस्य उभौ पुत्रौ अजेयः विजयश्चेति। अजेयस्य स्वभावः बाल्यात् एव वेदान्तपरः आसीत्। किन्तु विजयस्य स्वभावः सर्वथा एतद्विरुद्धः। राजत्वं प्राप्तव्यम् इति प्रबला इच्छा तस्य।

षोडशे वयसि अजेयः सर्वविद्यापारङ्गतः जातः। महाराजः विक्रमसेनः अजेयं युवराजं कर्तुं निश्चितवान्। किन्तु अत्र विरोधं प्रदर्शयन् उक्तवान् विजयः– ''अजेयः मत्तः वयसा ज्येष्ठः स्यात् नाम, किन्तु राज्यपालनविषये तस्य सामर्थ्यं न्यूनम्। वेदान्तिनः इव तस्य प्रवृत्तिः। अतः सः कश्चन दार्शनिकः भवितुम् अर्हति, न तु शासकः'' इति।

तदा तत्रैव स्थितः अजेयः उक्तवान्– ''महाराजः जनकः वेदान्ती आसीत्। किन्तु तेन योग्येन एव क्रमेण राज्यपालनं कृतम्। राजर्षिः इति ख्यातिः प्राप्ता तेन। अतः भवतः अपि यदि वेदान्तज्ञानं किञ्चित् स्यात् तर्हि वरं भवेत्'' इति।

''कस्यचित् अपि विषयस्य किञ्चिज्ज्ञानं मह्यं सर्वथा न रोचते। भवान् वेदान्ती सन् अपि राज्याकाङ्क्षया युक्तः अस्ति। कीदृशं वेदान्तित्वं भवतः! धिक् भवतः कपटताम्!'' इति धिक्कारयुक्तेन स्वरेण उक्तवान् विजयः।

तदा अजेयः हसन् उक्तवान्– ''अहं कदापि आत्मानं वेदान्तिनम् न उक्तवान्। भवान् एव मां वेदान्तिनं कथयन् अस्ति। 'अहं राज्यम् इच्छामि' इति वदन् अस्ति अपि। किन्तु एतादृशेषु विषयेषु ज्येष्ठानाम् आशयस्य अनुगुणं व्यवहरणीयम् अस्माभिः। ज्येष्ठाः विचिन्त्य निर्णयन्ति इत्यत्र विश्वासः करणीयः'' इति।

तदा राजा विक्रमसेनः उक्तवान्– ''पुत्रौ! किं विवादेन? मम तु अपेक्षा यत् भवद्भ्यां रामलक्ष्मणाभ्याम् इव स्थातव्यम् इति।

ज्येष्ठः एव सिंहासनारोहणाधिकारं वहति। एषः एव प्राचीनः सम्प्रदायः। अतः विजय! राजत्वप्राप्तीच्छां त्यजतु भवान्'' इति।

''अहं सामर्थ्ये विश्वसिमि, न तु सम्प्रदाये'' इति कोपेन उक्तवान् विजयः।

तदा अजेयः उक्तवान्– ''सम्प्रदाये विश्वासः भवतः अंशतः अस्ति इत्यतः एव भवान् पितरं पृच्छन् अस्ति यत् मां युवराजं करोतु इति। यदि सामर्थ्यमात्रे विश्वासः स्यात् तर्हि राज्ये स्थितान् सर्वान् युवकान् जित्वा सामर्थ्यातिशयं निरूप्य सिंहासनं प्राप्तव्यं स्यात्'' इति।

एतस्य उत्तरं किं दातव्यम् इति अजानन् मौनं स्थितवान् विजयः। तस्य मुखं कान्तिहीनं जातम्। तदा अनुजस्य स्कन्धे हस्तं स्थापयन् पुनः उक्तवान् अजेयः– ''एतदर्थम् एव मया उक्तं यत् भवता अपि वेदान्तशास्त्रं किञ्चित् अध्येतव्यम् इति। ततः बुद्धिः तीक्ष्णा भवति। मनः पक्वं भवति अपि'' इति।

एतस्य श्रवणात् विजयः कोपेन एव उक्तवान्– ''राज्ञः बाहुबलम् अस्ति चेत् पर्याप्तम्। बुद्धितीक्ष्णता इत्यादयः मन्त्रिषु भवन्ति। तदाधारेण राज्यपालनं विनायासं कर्तुं शक्येत। मम तु बाहुबलम् अस्ति। यदि भवतः अपि बाहुबले विश्वासः स्यात् तर्हि आवयोः परीक्षा भवतु, येन च निर्णीतं भवेत् यत् कः एतस्य देशस्य राजा भवितुम् अर्हति



इति'' इति।

अजेयः विजयस्य एतं प्रस्तावम् अङ्गीकृतवान्। विजयस्य विद्याभ्यासः इतोऽपि पूर्णः न जातः आसीत्। अतः अजेयः उक्तवान् यत् वर्षद्वयानन्तरम् एषा परीक्षा प्रचलतु इति।

वर्षद्वयाभ्यन्तरे विजयः महता परिश्रमेण युद्धविद्याम् अधीतवान्। सर्वासु युद्धविद्यासु पारङ्गतः जातः अपि। गुरवः तस्य प्रशंसां कृतवन्तः। ततः कदाचित् अजेय-विजययोः स्पर्धा प्रवृत्ता। किन्तु विजयः स्पर्धायां पराजितः अभवत्।

एतेन आश्चर्यं प्रकटयन् अजेयम् उक्तवान् विजयः– ''युद्धविद्यायाम् एतावत्सामर्थ्येन




युक्तस्य भवतः राज्याकाङ्क्षा न स्यात् इत्यत्र को वा विश्वासं कुर्यात्?'' इति।

''विजय! सामर्थ्यं, निःस्वार्थता, वेदान्तप्रवृत्तिः – इत्येते त्रयः गुणाः यस्मिन् भवन्ति सः एव राजा भवितुम् अर्हः। वस्तुतः तु राज्याकाङ्क्षा मम विशेषतः नास्ति। किन्तु पितुः इच्छां विरोद्धुं न इच्छामि अहम्। अन्यच्च प्रजानां हितम् अपि चिन्तनीयं खलु मया? अतः अहं सिंहासनारोहणम् अङ्गीकृतवान्'' इति उक्तवान् अजेयः।

विक्रमसेनः अन्तिमतया निर्णीतवान् यत् अजेयः एव सिंहासने उपवेशनीयः इति। विजयः पुनरपि विरोधं प्रकटितवान्। विक्रमसेनः एतं विरोधम् उपेक्षितवान्।

तदा विजयः मातुः समीपं गत्वा उक्तवान्– ''अम्ब! राजत्वं प्राप्तव्यम् इति मम प्रबला इच्छा। मम इच्छां विरुध्य यदि व्यवह्रियेत तर्हि मया विद्रोहकार्यम् आश्रयणीयं भवेत्। यदि अग्रजे राज्याकाङ्क्षा न स्यात् तर्हि मह्यं राज्यस्य दाने पितुः का वा आपत्तिः?'' इति।

''वत्स! यदि राजविरोधः आचर्यते तर्हि मरणदण्डनं प्राप्तव्यं भवेत्। अतः अविवेकेन मा व्यवहरतु कृपया। सहोदरयोः यः ज्येष्ठः भवति सः राजा भवेत् इति तु सम्प्रदायः'' इति वदन्ती महाराज्ञी पुत्रं विवेकं बोधयितुं बहुधा प्रयत्नं कृतवती।

किन्तु विजयः एतत् अनङ्गीकुर्वन् उक्तवान्– ''अग्रजस्य राजत्वं कदापि न भवेत्। सेनायां बहवः मत्पक्षपातिनः सन्ति। सेनाधिपतिः अपि चञ्चलमनस्कः अस्ति। मित्रजनानां बहूनां प्रोत्साहः अपि अस्ति मम। अतः अहं यदि राजविरोधं कुर्वन् युद्धं कुर्यां तर्हि निस्सन्देहं जयः मम एव। अग्रजेन अरण्यं गन्तव्यं भवेत्'' इति।

पुत्रस्य एतस्मात् वचनात् भीता महाराज्ञी पतिम् आनाय्य सर्वं निवेदितवती। विजयः सिंहासनप्राप्तौ एवम् अत्युत्सुकः अस्ति इति ज्ञात्वा राजा विक्रमसेनः उभौ अपि पुत्रौ आहूय विजयं सूचितवान् यत् राजद्रोहः आचरितः चेत् कठोरं दण्डनं प्राप्तव्यं भवेत् इति।

तदा अजेयः उक्तवान्– "तात! भवता एतद्विषये अधिकं चिन्तनीयं नास्ति। विजयस्य कार्याणि अहं परिशीलयन् एव आसम्। सः येन येन मिलितवान्, तेन तेन सह अहम् अपि मिलितवान्। विजयस्य विरोधं प्राप्तुम् अनिच्छन्तः ते तत्काले अङ्गीकारं प्रदर्शितवन्तः। किन्तु तेषु कोऽपि राजद्रोहं कर्तुं न इच्छति। अतः अलं चिन्तया। विजयः अविचार्य यत् कृतवान् तदर्थं तं क्षाम्यतु कृपया" इति।

"राजत्वं प्राप्तव्यम् इति एतस्य प्रबला इच्छा। अस्थाने प्रयत्नं कुर्वन् एषः यदि न दण्ड्येत तर्हि कालान्तरे विपत्तिः सम्मुखीकरणीया भवेत्" इति उक्तवान् राजा विक्रमसेनः।

तदा अजेयः उक्तवान्– "राज्याकाङ्क्षा सर्वथा नास्ति मम। अतः विजयं राजानं कृत्वा तस्मै एकवर्षात्मकम् अवधिं ददातु। तत्काले तस्य शासनं प्रजाभिः अङ्गीकृतं चेत् अग्रे अपि सः एव राजा भवतु। अहं च अरण्यं गत्वा तपः आचरिष्यामि" इति।

अनिच्छन् अपि राजा विक्रमसेनः एतं प्रस्तावम् अङ्गीकृतवान्। विजयः एकं वर्षं यावत् समीचीनतया सुव्यवस्थिततया च शासनं कृत्वा प्रसिद्धिम् अपि प्राप्तवान्।

कदाचित् अजेयः काञ्चित् सभाम् आयोज्य स्वाभिप्रायं प्रकटितवान्– "विजयः उत्तमः शासकः इत्येतत् एतावता प्रमाणितम् अस्ति। अतः अहं राज्यं तस्मै एव समर्प्य अरण्यं गन्तुम् इच्छामि" इति।




तदा सभायां स्थिताः सर्वे एकस्वरेण उक्तवन्तः यत् अजेयः एव राजा भवेत् इति। जनानाम् एतत् घोषणं श्रुतवतः विजयस्य मुखं विच्छायं जातम्। सः असन्तोषेण सभासदः पृष्टवान्– "मम सामर्थ्ये भवतां विश्वासः नास्ति वा?" इति।

तदा सभासदः एवम् आशयं प्रकटितवन्तः यत् अजेयस्य उपस्थित्या विजयस्य सामर्थ्यं शक्तियुक्तं जातम्। यदि अजेयस्य उपस्थितिः न स्यात् तर्हि विजयस्य शासनं दुर्बलम् एव भवेत्। अजेयसदृशः जनः लोके अन्यः कोऽपि न प्राप्येत इति।



तदा अजेयः उक्तवान्— "एतस्य राज्यस्य राजा अहम् एव। विजयः मम प्रतिनिधिरूपेण अत्र स्थास्यति। अहम् अरण्ये वसन् तपसा अपूर्वाः शक्तीः सम्पादयितुं, ततः देशहितं साधयितुं च प्रयत्नं करिष्यामि। विजयस्य शासने कोऽपि लोपः यदि दृश्यते, यदि च कस्यापि अन्याय्यं जातं स्यात्, तर्हि न्यायनिर्णयम् अहं करिष्यामि। मम अरण्यगमनं सुनिश्चितम्। अत्र कदापि परिवर्तनं न भविष्यति" इति।

विजयः राजा जातः। तावता अपि तस्य तृप्तिः नास्ति। 'प्रजाः माम् अजेयस्य प्रतिनिधिमात्रं भावयन्ति। अजेयः स्वयं सामर्थ्यवान्। यदि सः तपोबलेन अपि युक्तः स्यात् तर्हि अपायकारी एव भवेत्' इति चिन्तयति स्म विजयः। केनापि उपायेन अजेयः निग्रहणीयः इति आलोच्य सः कारागारे स्थितान् क्रूरान् अपराधिनः बन्धविमुक्तान् कृत्वा आदिष्टवान् यत् भवद्भिः अरण्यस्थः अजेयः मारणीयः इति। किन्तु अरण्यं गताः ते अजेयस्य तपश्शक्त्या उपदेशेन च प्रभाविताः सन्तः परिवर्तनं प्राप्य तस्य शिष्याः जाताः।

एतया घटनया अपि विवेकः न प्राप्तः विजयेन। सः अग्रजस्य तपसः भङ्गार्थं अप्सरस्सदृशीः सुन्दरतरुणीः अरण्यं प्रेषितवान्। अजेयः शिष्यैः ताः परिणायितवान्। अनुजं प्रति वार्तां प्रेषितवान् यत् एतादृश्यः सुन्दर्यः तरुण्यः इतोऽपि भवता प्रेषणीयाः, येन मम अविवाहिताः शिष्याः सुन्दरीं पत्नीं प्राप्नुयुः इति।

विजयः निर्णीतवान् यत् अजेयस्य अहिताचरणं कष्टकरम् एव इति। यावत् अजेयस्य प्रभावः राज्ये भवति तावत् मम गौरवं न वर्धते इति आलोच्य सः सडिण्डिमघोषं वार्तां प्रसारितवान् यत् अहम् अजेयस्य प्रतिनिधिः न, अपि तु एतस्य देशस्य राजा अस्मि इति।

एतस्य घोषणात् बहवः राजोद्योगिनः विरोधं प्रकटितवन्तः। विजयः तादृशान् देशात् बहिष्कृतवान्। ते अरण्यं गत्वा अजेयं प्रवृत्तं समग्रं निवेदितवन्तः।

अजेयः तान् उक्तवान्– "अहं विजयस्य शासनव्यवहारे हस्तक्षेपं कर्तुं न इच्छामि। यदि भवन्तः विजयस्य शासनक्रमेण तृप्ताः न स्युः तर्हि अत्रैव वासं कर्तुम् अर्हन्ति। भवतां वासार्थम् अत्र योग्या व्यवस्था उपकल्पयिष्यते" इति।

दिने दिने विजयस्य शासने दुराचाराः प्रवृद्धाः। अतः राज्यं परित्यज्य अरण्यं गच्छतां सङ्ख्या अपि प्रवृद्धा। अजेयः तादृशेभ्यः सर्वेभ्यः आश्रयं दत्तवान्। एतावतां जनानां व्यवस्थायाः निर्वहणं सुलभं न खलु? अजेयः स्वतपःशक्त्या एकम् अपूर्वं वटवृक्षं सृष्टवान्। अपेक्षितं सर्वं तस्मात् वटवृक्षात् प्राप्यते स्म।

कदाचित् विजयः कैश्चित् सैनिकैः सह अग्रजस्य समीपम् आगत्य उक्तवान्– "अत्र भवान् अपराधिभ्यः आश्रयं दत्तवान् अस्ति। राजद्रोहः आरोप्यते मया। किं उत्तरं ददाति भवान्?" इति।

अनुजस्य एतं प्रश्नं श्रुत्वा नितरां क्रुद्धः अजेयः उक्तवान्– "एतस्य देशस्य राजा अहम् एव। अतः भवतः आरोपस्य उत्तरं मया दातव्यं नास्ति। एतत्क्षणे एव मम राज्यात् निर्गच्छतु भवान्" इति।

तदा क्रुद्धः विजयः सैन्यबलेन अजेयं तदाश्रितान् जनान् च बन्द्धुं प्रयत्नं कृतवान्। एतत् दृष्ट्वा अजेयः किञ्चिदपि न भीतः। सः वटवृक्षं पश्यन् सकृत् करताडनं कृतवान्। ततः वृक्षशाखातः असङ्ख्याः सैनिकाः उत्पन्नाः। ते प्रत्याक्रमणं कृत्वा विजयं



तत्सैनिकान् च बन्धने स्थापितवन्तः।

सर्वं दृष्ट्वा तृप्त्या शिरः चालयन् अजेयः आज्ञां कृतवान् यत् एतं देशद्रोहिणं देशात् बहिष्कुर्वन्तु इति। ततः सः अरण्यं परित्यज्य राजधानीं गतवान्। पट्टाभिषिक्तः सन् अरुणगिरिराज्यस्य राजा जातः।

वेतालः एवं कथां समाप्य अवदत्– "राजन्! अजेयः यद्यपि वेदान्ती, संयमी, शान्तः च आसीत्, तथापि राज्यप्रलोभनया आकृष्टः खलु? अपकुर्वन्तम् अनुजं द्विवारं क्षमया अनुगृहीतवान् सः। किन्तु अन्ते अनुजं राज्यात् बहिष्कृत्य स्वयं सिंहासनम् आरूढवान्। राज्यप्रलोभनम् एव अत्र कारणं खलु? तदीयः एकः स्वार्थगुणः अन्यान् सद्गुणान् धूलिसात् अकरोत् खलु? एतत् अजेयस्य पराजयः एव खलु? एतेषां प्रश्नानाम् उत्तराणि जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "केवलं सद्गुणैः युक्तता लोके अपर्याप्ता भवति। तत्रापि यः समाजे उच्चस्थाने भवति तेन विवेकिना अपि भावितव्यम्। सद्गुणी सन् अपि यः विषमपरिस्थितिम् अवलोक्य अपि मौनं तिष्ठति सः भीरुः इत्येव वक्तव्यं भवति। विजये बाल्यात् एव राज्याकाङ्क्षा आसीत्। राज्यं प्राप्तं चेदपि तस्य दुराशा न शान्ता। तदीयाः दुराचाराः प्रवृद्धाः। अनुजस्य परिवर्तनं कर्तुं सर्वथा न शक्यते इति ज्ञात्वा अजेयः अनुजं देशात् बहिष्कृतवान्। राजद्रोहः राजपरिवारसम्बद्धः सिंहासनसम्बद्धः च भवति प्रायः। किन्तु प्रजाद्रोहः राज्यसम्बद्धः भवति। अतः एव अजेयः विजयं देशद्रोहिणम् उद्घोष्य योग्यं दण्डनं विहितवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



अस्मद्देशीया पशुपक्षिसम्पत्–

# गृध्राः



अन्ताराष्ट्रियानां क्रीडोत्सवानां स्पर्धानां च आरम्भतः पूर्वं विश्वशान्तेः सङ्केतरूपेण कपोताः स्वच्छन्दविहारार्थं प्रेष्यन्ते इति प्रायः अस्माभिः श्रुतम् एव। प्राचीने काले कपोताः हंसाः च पत्रवाहकाः अपि आसन् इत्यपि श्रूयते। शुकाः भाषणसमर्थाः क्रियन्ते इति तु इदानीम् अपि द्रष्टुं शक्यम्। एवम् एव गृध्राणाम् उपयोगः अपि क्रियते लोके। अन्यपक्षिणां मृगयार्थं गृध्राः शिक्ष्यन्ते। एवं शिक्षिताः गृध्राः आकाशे डयमानान् पक्षिणः लीलया गृहीत्वा आनयन्ति। आकाशे गाम्भीर्येण सञ्चरन्तः एते हठात् आक्रमणं कृत्वा आहारं दर्शनमात्रेण गृह्णन्ति। दृढेन शरीरेण, बलयुताभ्यां पक्षाभ्यां च युक्ताः एते गृध्राः प्रतिघण्टं २८० कि.मी. वेगेन उड्डयनं कर्तुं समर्थाः भवन्ति प्रायः।

उत्तरभारते पहीन्नामकजातीयस्य गृध्रस्य साहाय्येन केचन राजकुटुम्बीयाः पक्षिमृगयास्पर्धाम् आयोजयन्ति स्म। गृध्राः डयमानान् पक्षिणः गृहीत्वा वृक्षस्य उपरि उपविश्य पुच्छ-रोमादीनि अपनीय मन्दं खादन्ति।

प्रपञ्चे प्रायः षष्ट्यधिकजातीयाः गृध्राः स्युः इति भाव्यते। गृध्राणां नासिकापर्वस्थ-नखभागः दृढः तीक्ष्णः च भवति। पहीन्जातीयानां गृध्राणां तु कृष्णरेखायुक्तं शिरः, विशालौ पक्षौ च भवन्ति। गृध्राणाम् अधोभागः पाटलवर्णेन रक्तवर्णेन वा युक्तः भवति। केषाञ्चित् गृध्राणाम् उदरस्य अधः कृष्णरेखाः दृश्यन्ते अपि।

जनसञ्चाररहिते पर्वतशिखरे गृध्राः नीडान् रचयन्ति। प्रतिवर्षं तत्रैव ते नीडं रचयन्ति, यत्र पूर्ववर्षे नीडरचनं आसीत्। गृध्रस्य आकारस्य अपेक्षया गृध्र्याः आकारः महान्। गृध्री सकृत् त्रीणि चत्वारि वा रक्तवर्णानि अण्डानि प्रसूते।



# आधुनिकं भारतीयसाहित्यम्

भारत-पाकिस्थानयोः विभजनात् पूर्वं प्रवृत्ता घटना एषा। पञ्जाबप्रदेशे ग्रामे पूरीनामिका सुन्दरी तरुणी निवसति स्म। पार्श्वग्रामीणस्य रामचन्दस्य एतस्याः च विवाहः निश्चितः आसीत्। भाविनः विवाहस्य कल्पनां कुर्वतीं, ततः सन्तोषेण दिनानि यापयन्तीं पुरीं रषीदः नाम युवकः अपहृत्य नीतवान्।

कुसीदवाणिज्येन जीवन्तः पूर्याः पूर्वजाः रषीदस्य पूर्वजान् बहुधा पीडितवन्तः आसन्, तेषां कुटुम्बानि नाशितवन्तः आसन् अपि। एतं द्वेषं मनसि निधाय प्रतीकारसाधनेच्छया पूरीम् अपहृतवान् आसीत् रषीदः।

## अमृताप्रीतंवर्यायाः कृतिः – 'पिञ्जारि'



रषीदस्य गृहे कानिचन दिनानि बन्दीरूपेण स्थिता पूरी कदाचित् मध्यरात्र-समये कथमपि ततः आत्मानं विमोच्य पलाय्य स्वगृहं प्राप्तवती।

किन्तु गृहे तया घोरः अनादरः प्राप्तः। 'मुस्लिंयुवकेन अपहृतायै एतस्यै गृहे आश्रयः दत्तः चेत् समाजस्य अनादरः विरोधः च सम्मुखीकरणीयः भवेत्' इति चिन्तयन्तः गृहसदस्याः गृहे तस्यै आश्रयस्य दानं निराकृतवन्तः।

निराश्रया अबला तरुणी इदानीं किं वा कुर्यात्? अनन्यगतिका सा रषीदम् एव शरणं गतवती।

रषीदः तस्यै स्वगृहे आश्रयं दत्तवान्। ततः तयोः विवाहः जातः। तौ ग्रामं परित्यज्य अन्यग्रामे वासम् आरब्धवन्तौ।

पूर्याः अनुजा रामचन्दं परिणीतवती। रामचन्दस्य अनुजा पूर्याः अनुजं परिणीतवती।

पूरी 'हमीदा' इति नाम प्राप्तवती। सा रषीदं परिणीतवती इत्यतः मातृगृहसम्बन्धः सर्वथा छिन्नः जातः। पतिः रषीदः तां महता अनुरागेण पश्यति स्म। तयोः पुत्रः अपि जातः। एवम् एव वर्षाणि गतानि।

भारत-पाकिस्थानयोः विभागः जातः। तदा देशे जातिकलहाग्निः उत्पन्नः। अन्यमतीयस्य मारणे जनाः उद्युक्ताः अभवन्। पूरी यत्र वसति स्म स च ग्रामः पाकिस्थाने अन्तर्भूतः जातः। अतः तत्रत्यान् हिन्दून् ततः निष्कासयितुम्

उद्युक्ताः अभवन् मुसल्मान्जनाः। सर्वेषु ग्रामेषु एषा एव स्थितिः। एवं निर्गताः केचन धावन्तः कस्मिंश्चित् गृहे स्थितवन्तः। तेषां तत्र स्थितिं जानन्तः केचन दुष्टाः तत् गृहम् अग्निसात् कृतवन्तः। तावता तत्र उपस्थिताः आरक्षकाः गृहे स्थितान् जनान् रक्षितवन्तः। किन्तु तावता एव तेषु त्रयः दग्धाः आसन्। ये सजीवम् आसन् ते महता कष्टेन भारतं प्राप्तवन्तः।

ग्रामं परित्यज्य गच्छन्तः केचन हिन्दवः आरक्षकैः रक्ष्यमाणाः, पूर्याः ग्रामे एव एकां रात्रिं यावत् वसतिं कृतवन्तः।

तत्समये पूरी रामचन्द्रं दृष्टवती, यश्च तया परिणेतव्यः आसीत्। रामचन्दतः तया ज्ञातं यत् अनुजस्य पत्नी लज्जिनी कुत्रापि न दृश्यते इति।

यदा प्रातःकालः जातः तदे ते ततः निर्गताः। पूरी लज्जिन्याः अन्वेषणार्थम् उद्युक्ता अभवत्। लज्जिनी कस्याश्चित् विधवायाः गृहे आश्रयं प्राप्तवती आसीत्। 'सुन्दरीम् एतां यदि अह परिणयेयं तर्हि वरं भवेत्' इति चिन्तयन् आसीत् तस्याः विधवावृद्धायाः पुत्रः।



एतत् जानती पूरी पत्युः रषीदस्य साहाय्येन अर्धरात्रे लज्जिनीं रहसि आनीय अनुजस्य गृहं प्रापितवती।

'भारतं प्रति गन्तुम् एषः एव सुसमयः। अतः भवती अस्माभिः सह आगच्छतु' इति पूरीं प्रार्थयति अनुजः।

किन्तु पूरी पतिं परित्यज्य आगन्तुम् अनिच्छन्ती भारतं प्रति गमनं निराकृतवती। पूर्वं यद्यपि प्रतीकारबुद्ध्या रषीदः ताम् अपहृतवान् आसीत्, किन्तु अनन्तरकाले तस्याः पतिः सन् सः प्रीत्या एव तां दृष्टवान् आसीत्।

अत्याचारादिकारणतः अस्थिपञ्जरसदृशत्वं प्राप्तवतीनाम् अबलानां महिलानां जीवनं सुसम्यक् प्रकाशयतः 'पिञ्जारि'– (अस्थिपञ्जरम्) नामकस्य कथाग्रन्थस्य सारः एषः। पञ्जाबीया ग्रन्थकर्त्री अमृता प्रीतम् एतं ग्रन्थं रचितवती अस्ति। समाजजीवनं यथार्थतया निरूपयितुम् इच्छन्त्या तया एतस्य कथाग्रन्थस्य अन्वर्थं नाम निर्दिष्टम्– 'अस्थिपञ्जरम्' इति। अमृता प्रीतंवर्यया साहित्याकडमीप्रशस्तिः ज्ञानपीठप्रशस्तिश्चापि प्राप्ता अस्ति।

# भवन्तः जानन्ति वा?

१. क्रैस्ताः दुःखसमाचाररूपेण कृष्णवर्णीयं वस्त्रं धरन्ति। चीनादेशीयाः दुःखसमाचाररूपेण कीदृशं वस्त्रं धरन्ति?
२. मुम्बईनगरे विद्यमानं 'गेट् वे आफ् इण्डिया' कस्य महाराजस्य स्मरणार्थं निर्मितम् अस्ति?
३. विक्टोरियामहाराज्ञी इङ्ग्लेण्डदेशं कति वर्षाणि पालितवती?
४. 'कबुकि' नामिका नृत्यनाटकपद्धतिः कस्य देशीया?
५. अमेरिका-संयुक्तराष्ट्रसमूहस्थं तत् राज्यं किं, येन च प्रथमं स्वातन्त्र्यम् उद्घोषितं, ततश्च अमेरिकाधीनता एव अङ्गीकृता?
६. आङ्ग्लेयाः १७८८ तमे वर्षे आस्ट्रेलियादेशस्य किं नगरं 'कारागृहवासिनां प्रदेशः' इति प्रकटितवन्तः?
७. सामान्यतः २००० वर्षेभ्यः पूर्वं स्वातन्त्र्यं प्राप्तः आफ्रिकादेशः कः?
८. सः ग्रीकतत्त्वज्ञानी कः? यश्च २४०० वर्षेभ्यः पूर्वं मरणदण्डनम् अनुभूतवान् आसीत्?
९. अस्माकं देशे प्रकाशितायाः प्रथमवार्तापत्रिकायाः प्रकाशकः कः?
१०. चीनादेशं पालितवान् प्रथमः महाराजः कः?
११. भूमौ अत्यन्तं शीतलः प्रदेशः कः?
१२. 'सर् ऐसाक् पिट्मन्' कस्मिन् विषये प्रसिद्धिं प्राप्तवान्?
१३. 'ताज्महल्' भवनस्य रूपस्य कल्पनां कः शिल्पी कृतवान्?
१४. सः देशः कः, येन प्रथमतया महिलाभ्यः मतदानस्य अधिकारः दत्तः?
१५. किं राजधानीनगरम् अत्यन्तम् उन्नते प्रदेशे अस्ति?
१६. आकाशे प्रयाणं कृतवती प्रथमा महिला का?
१७. मीटर्गेज्-ब्राड्गेज् एतयोः परिमाणभेदः कः?
१८. अस्माकं देशे प्रसिद्धः सर्पदेवालयः कः?
१९. 'कर्णाटकसङ्गीतस्य त्रिरत्नम्' इति कान् वदन्ति?
२०. ब्रह्मपुत्रनदः कुत्र केन समुद्रेण मिलति?

# उत्तराणि

१. श्वेतवर्णीयं वस्त्रम्।
२. इङ्ग्लेण्ड्महाराजस्य।
३. ६३ वर्षाणि।
४. जपान् देशीया।
५. रोड् ऐल्याण्ड्देशेन।
६. सिड्नि नगरम्।
७. इथियोपिया।
८. साक्रटीस्।
९. जेम्स् आगस्टस् हिक्की।
१०. चङ्गीसखान् नामकस्य पौत्रः कुब्लाखान्।
११. अण्टार्टिकाप्रदेशे विद्यमानं वास्टाक् स्टेषन्। (−८७° सेल्सियस्)
१२. शीघ्रलिपिविद्यायाम्।
१३. उस्ताद् ईसा।
१४. न्यूझील्याण्ड्देशेन। १८९३ तमे वर्षे।
१५. लापाज्नगरम्। (बोलिवियादेशस्य राजधानी।)
१६. वालेण्टिना तेरेस्कोवा।
१७. मीटर्गेज्-वैशाल्यं १ मीटर्। ब्राड्गेज्-वैशाल्यं ६६ अङ्गुलानि।
१८. आन्ध्रराज्यस्थं नागार्जुनदेवालयः।
१९. त्यागराजः, शामशास्त्री, मुत्तुस्वामी दीक्षितः च।
२०. बङ्गालोपसागरेण। नौवखालीसमीपे।



# उत्तमः वैद्यः

विक्रमसेननामकः राजा कदाचित् मृगयार्थम् अरण्यं गतः मार्गभ्रष्टः अभवत्। मार्गस्य अन्वेषणसमये कण्टकानां स्पर्शतः तस्य समग्रे शरीरे व्रणाः जाताः। व्रणकारणतः वेदनाम् अनुभवन् राजा मन्दं मन्दं गच्छन् आसीत्। तदा कश्चन सर्पः महाराजं दष्टवान्। विक्रमसेनः मूर्च्छां गतः।

सः राजा पुनः यदा जागरितः तदा तेन मृदुतल्पे शयितम् आसीत्। जागरितं महाराजं दृष्ट्वा तस्य पार्श्वे उपविष्टः मुनिः– "मम शिष्याः मूर्च्छावस्थां प्राप्तवन्तं भवन्तं दृष्ट्वा अनुक्षणम् अत्र आनीतवन्तः। अहं यावत् जानामि तावत् चिकित्सां कृतवान्। इदानीं कथम् अस्ति भवान्?" इति पृष्टवान्।

तदा विक्रमसेनः स्वशरीरं परीक्षादृष्ट्या अवलोकितवान्। कुत्रापि व्रणस्य चिह्नम् अपि न दृश्यते स्म। सर्पदंशनस्य परिणामः अपि न दृश्यते स्म।

एतत् सर्वं दृष्ट्वा विक्रमसेनः तं मुनिं नमस्कृत्य उक्तवान्– "भवान् सामान्यः न, अपि तु महापुरुषः। एतादृशे अरण्ये भवतः वासः न उचितः। अतः भवान् मम राजधानीम् आगत्य व्याधिपीडिताः याः प्रजाः सन्ति, तासां चिकित्सां करोतु। तत्रैव वासम् अपि करोतु इति मम आशयः" इति।

तदा मुनिः मन्दहासपूर्वकम् उक्तवान्– "सुखम् अनुभोक्तव्यम् इति मम किञ्चित् अपि इच्छा नास्ति। मम पूर्वाश्रमे अहं प्रचण्डनामकस्य उत्तमस्य वैद्यस्य सेवां कुर्वन् वैद्यविद्यां किञ्चित् ज्ञातवान्। प्रचण्डः यावत् वैद्यकीयं जानाति, तत्र प्रतिशतम् एकम् अपि अहं सम्यक् न जानामि। उत्तमः वैद्यः प्रचण्डः एव भवतः राज्ये अस्ति। एवं स्थिते मम आवश्यकता का अस्ति?" इति।



तदा राजा आश्चर्येण उक्तवान्– "मम राज्ये प्रचण्डनामकः वैद्यः अस्ति इति अहं न जानामि" इति।

एतत् श्रुत्वा मुनिः– "प्रचण्डसदृशः महान् वैद्यः राज्ये अस्ति इति विषयं यदि भवान् न जानाति, तर्हि भवता उत्तमरूपेण राज्यपरिपालनं न कृतम् इत्यर्थः। सः वैद्यः भवतः राज्ये स्थिते सौभाग्यनगरे अस्ति। गच्छतु। इदानीम् एव गत्वा तं सम्मानयन् स्वस्य राजधर्मं परिपालयतु" इति आज्ञापितवान्।

अनन्तरं राजा मुनेः साहाय्येन राजधानीगमनमार्गं ज्ञात्वा राजधानीं गतवान्। मन्त्रिणम् आहूय पृष्टवान् च– "अस्माकं राज्ये राजसम्माननयोग्याः उत्तमाः वैद्याः सन्ति वा?" इति।

"वैद्यानां विषये अहं न जानामि प्रभो! राजवैद्यः प्रदीपः पृष्टः चेत् ज्ञायेत" इति उक्तवान् मन्त्री।

"तर्हि इदानीम् एव राजवैद्यम् आनाययतु" इति उक्तवान् राजा। मन्त्री राजवैद्यम् आनायितवान्।

प्रदीपः महाराजस्य सन्देहं श्रुत्वा उक्तवान्– "प्रभो! राजवैद्यस्य मम अपेक्षया उत्तमः वैद्यः अस्मिन् राज्ये एव नास्ति। मां सत्करोतु इति अहं कथं वा वदेयम्? अतः अद्यावधि अहं मौनम् आसम्" इति।

"एवं तर्हि सौभाग्यनगरे विद्यमानस्य प्रचण्डनामकस्य वैद्यस्य विषये भवान् किमपि न जानाति वा?" इति पृष्टवान् विक्रमसेनः।

प्रचण्डवैद्यस्य नामश्रवणमात्रेण राजवैद्यस्य प्रदीपस्य मुखे किञ्चित् परिवर्तनं जातम्। सः अप्रसन्नः एव उक्तवान्– "प्रभो, वैद्यस्य प्रचण्डस्य नाम श्रुतवान् अस्मि। किन्तु ये तस्य समीपं चिकित्सार्थं गच्छन्ति ते भिक्षुकाः भवन्ति इति श्रुतवान् अस्मि" इति।

प्रदीपस्य वचनं श्रुत्वा चकितः विक्रमसेनः पृष्टवान्– "भवान् एतं विषयं कथं ज्ञातवान्?" इति।

तदा प्रदीपः उक्तवान्– "केभ्यश्चित् दिनेभ्यः पूर्वं सौभाग्यनगरतः धनिकः कुमारगुप्तः अत्र आगतवान् आसीत्। सः मम

स्नेहितः। तद्द्वारा अहम् एतं विषयं ज्ञातवान्। वैद्यस्य धनसम्पादनेच्छा सहजा। किन्तु अत्याशा यदि भवति, तर्हि अमानवीयं भवति किल!'' इति।

अनन्तरं प्रदीपं ततः सम्प्रेष्य राजा अतृप्त्या एव मन्त्रिणम् उक्तवान्– ''अहं प्रचण्डविषये उत्तमानि वचनानि श्रुतवान्। एतं विषयं यः उक्तवान् सः महामुनिः। प्रदीपः यद्यपि आत्मानम् एव श्रेष्ठं भावितवान् स्यात्, तथापि महाराजस्य मम पुरतः प्रचण्डविषये असत्यं कल्पयित्वा वक्तुं तस्य धैर्यं नास्ति इति चिन्तयामि'' इति।

तदा मन्त्री उक्तवान्– ''समस्या-परिहारार्थम् अस्माभिः धनिकः कुमारगुप्तः एव द्रष्टव्यः। वयं वेषान्तरं धृत्वा तत् नगरं गत्वा वस्तुस्थितिं ज्ञात्वा आगमिष्यामः। अस्माकं राजवैद्यः प्रदीपः एव असत्यम् उक्तवान् स्यात् इति भाति'' इति।

अनन्तरदिने राजा मन्त्री च वेषान्तरं धृत्वा सौभाग्यनगरं गतवन्तौ। तत्रत्यस्य परिसरस्य अवलोकनात् तौ ज्ञातवन्तौ यत् प्रचण्डवैद्यस्य महती प्रसिद्धिः नास्ति इति। अतः तौ कुमारगुप्तेन मिलित्वा प्रचण्डविषये पृष्टवन्तौ।

प्रदीपेन प्रचण्डविषये यत् उक्तम् आसीत् तदेव उक्तवान् कुमारगुप्तः।

तदा मन्त्री कुमारगुप्तं पृष्टवान्– ''भोः, प्रचण्डः उत्तमः वैद्यः इति अरण्ये वसन् मुनिः अपि वदति इति ज्ञायते। किन्तु भवान् तद्विषये अनादरं प्रकटयति। कथम् एवम्?'' इति।



तदा कुमारगुप्तः मन्दहासपूर्वकम् उक्तवान्– "मया यत् उक्तं सः मम अभिप्रायः न, अपि तु प्रचण्डस्य प्राणमित्रस्य पराङ्कुशनामकस्य कवेः अभिप्रायः। यदि इच्छन्ति पराङ्कुशम् एव पृच्छन्तु भवन्तः" इति।

अनन्तरं राजा मन्त्री च ततः प्रस्थाय पराङ्कुशेन मिलितवन्तौ। पराङ्कुशस्य वचनेन अपि महाराजस्य तृप्तिः न अभवत्। अतः सः राजा खेदेन उक्तवान्– "प्रचण्डः उत्तमः वैद्यः स्यात्। किन्तु राजसम्माननार्हाः उत्तमाः गुणाः तस्मिन् न सन्ति। एतत् तु मम दौर्भाग्यम् एव" इति।

तदा तत्रैव स्थितः पराङ्कुशः राज्ञः वचनेन चकितः उक्तवान्– "मम कथनस्य आशयः एव भिन्नः। 'प्रचण्डः न केवलम् उत्तमः वैद्यः, अपि तु सज्जनः। एतत् सर्वे जानन्तु इति भङ्ग्यन्तरेण अहम् उक्तवान्। किन्तु भवान् अन्यथा चिन्तितवान्। प्रचण्डस्य धनसम्पादनेच्छा किञ्चित् अपि नास्ति। ये दरिद्राः सन्ति, भिक्षुकाः सन्ति, तेषां केवलं चिकित्सा करोति प्रचण्डः। यः कोऽपि धनिकः प्रचण्डस्य सकाशात् औषधम् इच्छति चेत् तेन भिक्षुकवेषः धरणीयः इति मम अभिप्रायः" इति।

पराङ्कुशस्य वचनं श्रुत्वा विक्रमसेनस्य समस्या परिहृता। श्रवणमात्रेण यस्य कस्यापि वचने विश्वासः न करणीयः। तत्रापि चमत्कारप्रियाणाम् कवीनाम् वचनेषु अन्योक्तिः स्यात् वा इति ज्ञातुं प्रयत्नः करणीयः इति राजा निश्चितवान्।

केषुचित् दिनेषु एव विक्रमसेनः वैद्यं प्रचण्डम् आहूय यथोचितं सम्माननं कृतवान्, अपि च राज्ये ये विविधेषु क्षेत्रेषु प्रसिद्धिं सम्पादितवन्तः, तेषां विषयेषु गुप्तचारद्वारा विषयसङ्ग्रहणम् आरब्धवान्। 'दरिद्राणां सेवा एव वास्तविकी सेवा' इति अंशं प्रचण्डवैद्यस्य व्यवहारात् ज्ञातवान् प्रदीपः। अतः सः अपि दरिद्राणां चिकित्सां निश्शुल्कं कर्तुम् उद्युक्तः अभवत्।





# अलसेन कृतं युद्धम्

महाकोसलराज्ये वीरदासः नाम कश्चन तरुणः निवसति स्म। सः परमालसः। निद्रां भोजनं चापि सः जानाति स्म, नान्यत् किमपि। तदीयौ मातापितरौ तु तस्य बाल्ये एव दिवङ्गतौ आस्ताम्। पितामह्याः अतिलालनात् सः अलसः जातः आसीत्।

वैदेहीराज्यं महाकोसलस्य प्रतिवेशिराज्यम्। तयोः देशयोः परस्परवैरं बहोः कालतः आसीत्। महाकोसलराज्यं जेतव्यम् एव इति उद्देशेन वैदेहीराज्यस्य राजा सिंहसेनः महतीं सेनां सज्जीकृत्य कदाचित् हठात् आक्रमणं कर्तुं निश्चितवान्।

एषा वार्ता गुप्तचरद्वारा महाकोसलराजेन चन्द्रकान्तेन ज्ञाता। अतः सः सडिण्डिमघोषम् आज्ञां प्रसारितवान् यत् सर्वे युवकाः सेनां प्रविशेयुः इति।

बहवः युवकाः देशरक्षणार्थं सोत्साहं सैनिकत्वं स्वीकृतवन्तः। तेषां युद्धकौशलस्य पाठनार्थं योग्यां व्यवस्थां कृतवान् राजा। ततः राजा गुप्तचरान् आदिष्टवान् यत् सेनायाम् अप्रविष्टः कोऽपि सुदृढः तरुणः अस्ति चेत् तं बलात् सेनायां प्रवेशयन्तु इति।

वीरदासः तु सैनिकानां दृष्टितः आत्मानं रक्षन् स्थितवान् आसीत्। गुप्तचराः तु तं गृहीतवन्तः एव। ते वीरदासम् उक्तवन्तः– "अद्यावधि किमर्थं भवता सैन्यं न प्रविष्टम्? अविलम्बेन सेनां प्रविश्य स्वस्य देशभक्तिं प्रमाणीकरोतु तावत्" इति।

एतत् श्रुत्वा आश्चर्यं प्रकटयन् वीरदासः उक्तवान्– "युद्धं, देशभक्तिः इत्येतत् पदद्वयम् ऐदम्प्राथम्येन शृण्वन् अस्मि। पितामह्याः गृहे भोजनात् ऋते, निद्रायाः ऋते च अन्यत् किमपि न जानामि अहम्" इति।

एतेन ते गुप्तचराः ज्ञातवन्तः यत् एषः परमालसः इति। ते तं बलात् नीत्वा युद्धशिक्षणशिबिरे योजितवन्तः।



सिंहसेनः सेनया सह महाकोसलराज्यस्य सीमासमीपम् आगतः आसीत्। राजा चन्द्रकान्तः अपि सेनां स्वीकृत्य शत्रुसैन्यं सम्मुखीकृतवान्। सर्वे सैनिकाः खड्गं, बाणवारकं च गृहीत्वा कवचं धृत्वा राजानम् अनुसृतवन्तः। किन्तु वीरदासः एतानि सर्वाणि नेतुम् अनिच्छन् खड्गमात्रं स्वीकृतवांन्। युद्धरङ्गे यदि बुभुक्षा भवेत् तर्हि उपयोगाय भवेत् इति विचिन्त्य कांस्यपात्रे रोटिकाः स्थापयित्वा उदरभागे वस्त्रस्य अन्तः गोपितवान्। मृत्पात्रेण जलं स्वीकृत्य तत् स्कन्धे बद्धवान्।

सेना युद्धभूमिं गता। युद्धम् आरब्धम्। एतत् दृष्ट्वा वीरदासः नितराम् आश्चर्यचकितः। 'युद्धरङ्गे स्थितं चेत् अपि मरणं निश्चितम्। पलायनप्रयत्नः अपि व्यर्थः एव' इति चिन्तितवान् सः। तत्र सर्वत्र अश्वाः, खड्गाः, बाणवारकाः च तेन दृश्यन्ते, नान्यत्।

अत्रान्तरे वीरदासेन कश्चन व्रणितः, भूमौ पतितः वृद्धसैनिकः दृष्टः। सः हस्तसङ्केतेन वीरदासं सूचितवान् यत् महती पिपासा अस्ति, कृपया जलं ददातु इति। वीरदासः तस्मै जलं दत्तवान्।

जलं पीत्वा सः वृद्धः सैनिकः स्ववस्त्रस्य अन्तः गोपितं विशिष्टं खड्गं प्रदर्शयन्– "एतं खड्गं शत्रोः वक्षःस्थलं प्रवेशयितुम् इच्छामि स्म। किन्तु तादृशं सौभाग्यं नास्ति मम। मम मरणम् आसन्नम् अस्ति। एतस्मिन् समये भवन्तं दृष्ट्वा अहं भावयामि यत् आत्मीयं मित्रं प्राप्तम् इति। मम सुन्दरी बुद्धिमती च पौत्री अस्ति। सा सनिश्चयं वदति यत् यं भवान् सूचयति तम् एव परिणेष्यामि इति। एतत् अङ्गुलीयकं स्वीकरोतु। एतत् तस्यै प्रदर्शयतु। सा भवन्तम् अवश्यं परिणेष्यति। कथञ्चित् एतस्मात् रणरङ्गात् आत्मानं संरक्ष्य तस्याः पतिः भवतु" इति उक्त्वा अङ्गुलीयकं वीरदासाय दत्त्वा खड्गं हस्तेन दृढं गृह्णन् एव प्राणैः वियुक्तः अभवत्।

वृद्धसैनिकस्य मरणं दृष्टवतः वीरदासस्य मनसि एषा भावना दृढा जाता यत् ममापि



मरणं सन्निहितम् एव इति। अत्रान्तरे आत्मरक्षणार्थं तेन कश्चन उपायः चिन्तितः। सः झटिति मृतस्य वृद्धसैनिकस्य पार्श्वे शयनं कृतवान्। वृद्धस्य शरीरं रक्तमयम् आसीत्। तदेव रक्तं स्ववस्त्रेषु योजितवान् सः। ततः शवः इव निश्चलं शयनं कृतवान् सः। अचिरात् एव तेन गभीरा निद्रा प्राप्ता।

अल्पे एव काले अनूह्या काचित् विपत् आपतिता। रणरङ्गे सैनिकाः प्राणापायम् अपि अविगणय्य युद्धं कुर्वन्तः आसन्। एतन्मध्ये व्रणिताः केचन अश्वाः इतस्ततः धावितवन्तः। तेषु अन्यतमः अश्वः धावन् वीरदासस्य स्कन्धे पादम् अस्थापयत्। महतीं वेदनाम् अनुभवन् वीरदासः झटिति उत्थितवान्।

तस्मिन् एव समये शत्रुराजः सिंहसेनः खड्गहस्तः अश्वारूढः च सन् गच्छन् वीरदासं दृष्टवान्। 'कवचं बाणवारकं च विना युद्धं कुर्वन् एषः निश्चयेन कश्चन वीराधिवीरः एव स्यात्' इति सः निश्चितवान्। सः एतम् उद्दिश्य– "अये, वीराधिवीरस्य संहारे एव ममापि रुचिः"। इति वदन् वीरदासम् उद्दिश्य खड्गं क्षिप्तवान्। स च खड्गः वीरदासस्य उदरभागे स्थितेन कांस्यपात्रेण घट्टितः सन् अधः अपतत्। ततः महान् शब्दः उत्पन्नः। तं शब्दं श्रुत्वा भीतः सिंहसेनस्य अश्वः हेषारवं कुर्वन् पृष्ठभागीयौ पादौ उन्नीय अतिष्ठत्। एतेन समस्थितिं रक्षितुम् अशक्नुवन् राजा अश्वात् सशब्दम् अपतत्।

यत् प्रवृत्तं तद्विषये आश्चर्यम् अनुभवन् राजा हस्तच्युतं खड्गम् अन्वेष्टुम् उद्युक्तः अभवत्। वीरदासः अपि– 'आलस्यं परित्यज्य यदि अहं खड्गविद्यानिपुणः भवेयं तर्हि वरम् अभविष्यत्। इदानीं मृतस्य एतस्य सैनिकस्य शवः एव मम रक्षकः' इति आलोच्य झटिति वृद्धसैनिकस्य शवम् उन्नीय राजानम् उद्दिश्य क्षिप्तवान्।

वृद्धसैनिकः तीक्ष्णं खड्गं हस्तेन गृहीत्वा एव मृतः आसीत् खलु? यदा शवः राज्ञः उपरि पतितः तदा स च खड्गः राज्ञः वक्षःस्थलं

प्राविशत्। 'वैदेहीराज्यं जयतात्' इति वदन् राजा अधः अपतत्, प्राणैः वियुक्तः अभवत् च। राज्ञः आकस्मिकं मरणं दृष्ट्वा वैदीहीराज्यस्य सैनिकाः पलायनं कृतवन्तः।

चन्द्रकान्तराजः ज्ञातवान् यत् शत्रुराजस्य सिंहसेनस्य मारणं वीरदासेन कृतम् इति। अतः सः वीरदाससमीपं गत्वा– "साधु वीर! साधु! अपूर्वं कृत्यं कृतं भवता। महत् शौर्यं चापि प्रदर्शितम्" इत्येवं बहुधा प्रशंसां कुर्वन् महता आदरेण तं प्रासादं नीत्वा पृष्टवान्– "वीराधिवीर! किम् इच्छति भवान्?" इति।

"महाराज! वीराधिवीरः अपि कश्चित् रणरङ्गे निश्चयेन श्रान्तः भवति एव खलु? अतः प्रथमम् उत्तमभोजनार्थं विश्रान्त्यर्थं च व्यवस्थां कारयतु" इति उक्तवान् वीरदासः।

राजा चन्द्रकान्तः तत्क्षणे एव एकम् उत्तमं भवनं तस्मै उपायनरूपेण दत्त्वा तत्र तस्य भोजनार्थं विश्रान्त्यर्थं च योग्यां व्यवस्थां कारितवान्। सप्ताहं यावत् तस्मिन् भवने वसन् वीरदासः सन्तोषेण भोजनं निद्रां च कुर्वन् कालं यापितवान्। ततः ग्रामं गत्वा पितामहीं शिबिकायाम् उपवेश्य स्वभवनम् आनीतवान्। पौत्रस्य एतादृशं वैभवं दृष्ट्वा पितामही नितराम् आश्चर्यचकिता।

द्वित्राणां दिनानाम् अनन्तरं वीरदासः वृद्धसैनिकस्य पौत्र्याः विषयं पितामहीं विस्तरेण निवेदितवान्। ततः पितामह्या सह तं ग्रामं गत्वा अङ्गुलीयकं प्रदर्श्य तां वृद्धसैनिकपौत्रीं स्वभवनम् आनीतवान्। राज्ञः अनुज्ञायाः अनुगुणं वृद्धसैनिकपौत्री-वीरदासयोः विवाहः महता वैभवेन प्रवृत्तः।

'मृत्युभयात् वा स्यात्, क्षणकालं वा स्यात्, यः पराक्रमः प्रदर्शितः तस्य फलतः एतावत् वैभवं प्राप्तम्। आलस्येन मया किं वा प्राप्येत? सर्वेषां निन्दनम् उपहासः च खलु? अतः अहं युद्धविद्यायां नैपुण्यं प्राप्य जीवनं सार्थकं करिष्यामि' इति आलोच्य वीरसेनः श्रद्धया परिश्रमेण च युद्धविद्याम् अधीतवान्। ततः अपूर्वं युद्धकौशलं प्राप्य सः सेनापतिपदम् अपि अलङ्कृतवान्।





# वीरः हनूमान्

चैत्रशुक्लपञ्चम्यां रामः अयोध्यां परित्यज्य वनवासं प्रति प्रस्थितवान् आसीत्। चैत्रशुक्लचतुर्थ्यां चतुर्दश वर्षाणि समाप्तानि अभवन्। तदनन्तरदिने एव रामः भरद्वाजाश्रमं प्राप्तवान्। सः भरद्वाजमुनिं नमस्कृत्य पृष्टवान्– "श्रीमन्! अयोध्यानगरं सुरक्षितं सुव्यवस्थितं च अस्ति खलु? भरतस्य राज्यपालनं सम्यक् प्रचलत् अस्ति खलु? अस्माकं मातरः सर्वाः कुशलिन्यः खलु? अयोध्यायाः प्रजाः सन्तोषेण जीवन्त्यः स्युः खलु?" इति।

तदा भरद्वाजः उक्तवान्– "भरतः भवतः पादुका पुरस्कृत्य राज्यशासनं कुर्वन् अस्ति। तपसि लीनस्य तस्य शरीरं जटाभिः आवृतम् अस्ति। भवतः प्रतीक्षां कुर्वन् अस्ति सः। अयोध्यायां सर्वे कुशलिनः सन्ति" इति।

सः मुनिः रामं प्रार्थितवान् यत् अद्य रात्रौ मम अतिथित्वेन भवता अत्रैव स्थातव्यम्, श्वः अयोध्यां प्रति गन्तुं शक्यते इति।

एतां प्रार्थनाम् अङ्गीकुर्वन् रामः हनूमन्तम् उद्दिश्य उक्तवान्– "आञ्जनेय! भवता शृङ्गवेरपुरं गत्वा भिल्लराजः गुहः निवेदनीयः यत् शत्रून् पराजित्य अहम् आगच्छन् अस्मि इति। मम आत्मीयं मित्रं सः एतां वार्तां श्रुत्वा नितरां सन्तुष्टः भविष्यति। ततः अयोध्यां प्रति गन्तुं मार्गं सूचयिष्यति सः। भरतस्य विषये अपि सः वदिष्यति। अनन्तरं भवता भरतः द्रष्टव्यः। मम कुशलवार्तां



निवेद्य , अहं सीता-लक्ष्मणाभ्यां सह प्रत्यागच्छन् अस्मि इत्यपि वार्ता निवेदयतु। सीतापहरणतः रावणसंहारपर्यन्तं यद्यत् प्रवृत्तं तत्सर्वं विस्तरेण भवान् तं निवेदयतु। एवं कथनसमये तस्य मुखं सुसूक्ष्मं परिशीलनीयं भवता। मया शत्रुसंहारः कृतः। असीमा कीर्तिः प्राप्ता। बलवन्ति मित्राणि प्राप्तानि। एतासां सर्वासाम् अभ्युदयवार्तानां श्रवणतः तस्य हृदये कीदृशाः भावाः उत्पद्यन्ते इति भवता तस्य मुखावलोकनात् एव ऊहनीयम्। पितृपरम्पराप्राप्तं राज्यं पालयन् अस्ति सः। हस्तगतस्य राज्यस्य परित्यागे तस्य कष्टं भवेत् कदाचित्। तथा अस्ति चेत् राज्यं तस्मै एव दातुम् इच्छामि अहम्। अतः सर्वं निवेद्य तत्रत्यां परिस्थितिं सम्यक् परिशील्य भरतस्य अन्तरङ्गम् अवगत्य अविलम्बेन प्रत्यागन्तव्यं भवता" इति।

रामस्य अनुज्ञां प्राप्य हनूमान् मानवरूपं धृत्वा आकाशमार्गम् आश्रित्य अयोध्याम् उद्दिश्य प्रस्थितवान्। प्रथमं सः शृङ्गवेरपुरं प्राप्तवान्। तत्र गुहं दृष्ट्वा निवेदितवान् सः— "प्रभुः श्रीरामः स्वस्य कुशलितां निवेदयितुं माम् आदिष्टवान् अस्ति। सीता-लक्ष्मणसमेतः सः अद्य रात्रौ भरद्वाजाश्रमे स्थित्वा श्वः प्रातः ततः निर्गमिष्यति। अचिरात् एव तं द्रक्ष्यति भवान्" इति। एवं रामागमनवार्तां निवेद्य गुहं तोषयित्वा ततः वेगेन नन्दिग्रामम् उद्दिश्य प्रस्थितवान् हनूमान्।

नन्दिग्रामं परितः सुन्दराः वृक्षाः आसन्। नन्दनवने यथा, तथा सौन्दर्यम् आसीत् तस्मिन् ग्रामे अपि। ततः अयोध्यानगरं घण्टाद्वयाभ्यन्तरे प्राप्तुं शक्येत। एतस्मिन् ग्रामे भरतस्य वासः। भरतः मृगचर्म धृत्वा आश्रमं निर्माय ऋषिजीवनतुल्यं जीवनं यापयति स्म।स्नानादीनाम् अभावतः तदीयं शरीरं धूलिलिप्तम् आसीत्। केशाश्च जटारूपं प्राप्तवन्तः आसन्। कन्द-मूल-फलानि खादन् दिनानि यापयन् आसीत् सः। नन्दिग्रामे तिष्ठन् सः मन्त्रि-पुरोहित-सेनाध्यक्षाणां साहाय्येन राज्यभारं निर्वहन्

आसीत्। भरतम् अनुकुर्वन्तः केचन नागरिकाः अपि वन्यवृत्त्या जीवन्तः नन्दिग्रामे वसन्ति स्म।

भरतसमीपं गत्वा विनयेन नमस्कृत्य उक्तवान् हनूमान्– "आर्य! श्रीरामः माम् आदिष्टवान् अस्ति यत् मम कुशलवार्तां निवेद्य आगच्छतु इति। भवतः चिन्तायाः अपगमनकालः आगतः। अचिरात् एव भवान् भवत्प्रजाः च नेत्रोत्सवं प्राप्स्यन्ति। रामः सीतापहारकं रावणं संहृत्य सीतां प्रतिप्राप्य बलशालिभिः मित्रैः सह अत्र आगच्छन् अस्ति। सीता लक्ष्मणः चापि तेन सह स्तः" इति।



एतां वार्तां श्रुतवतः भरतस्य असीमः आनन्दः। आनन्दातिरेकवशात् सः मूर्च्छां गतः। अल्पे एव काले सचेतनतां प्राप्य सः हनूमन्तम् उक्तवान्– "महाशय! भवान् चिरकालकाङ्क्षितां मधुरां प्रियां वार्तां निवेदितवान् अस्ति। न जानामि अहं यत् भवान् मानवः उत देवः कश्चन इति। प्रियतमवार्ता निवेदिता यत् तदर्थं भवते लक्षं धेनवः, शतं ग्रामाः, बहूनि अमूल्यानि आभरणानि, चतुर्दश कन्यकाः च उपायनरूपेण दीयन्ते" इति।

पादुके स्वीकृत्य चित्रकूटात् भरतस्य प्रत्यागमनानन्तरं यद्यत् प्रवृत्तं तत्सर्वं विस्तरेण भरतं निवेदितवान् हनूमान्।

रामकथां विस्तरेण श्रुत्वा आनन्दम् अनुभवन् भरतः शत्रुघ्नम् आज्ञापितवान्– "सर्वेषु देवालयेषु विशेषपूजाः उत्सवाः च प्रचलन्तु। सर्वे स्नानादिकं समाप्य शुचिभूताः सन्तः विविधैः वाद्यैः, विविधैः पुष्पहारैः, विविधसुगन्धद्रव्यैः च सह रामं स्वागतीकर्तुं अत्र आगच्छन्तु" इति।

शत्रुघ्नः भरतस्य आज्ञायाः प्रसारार्थं व्यवस्थां कृत्वा सहस्रं सैनिकान् आहूय आज्ञापितवान्– "नन्दिग्रामतः अयोध्यापर्यन्तं यः मार्गः अस्ति तत्र अल्पा अपि निम्नोन्नतता यथा न स्यात् तथा मार्गं त्वरया समतलं कुर्वन्तु। मार्गे सर्वत्र पुष्पाणि विकिरन्तु। श्वः सूर्योदयात् पूर्वम् अयोध्यानगर्याः सर्वे मार्गाः, सर्वाणि गृहाणि च

अलङ्कृतानि भवन्तु। राजमार्गे सर्वत्र पुष्पतोरणानि निर्मितानि भवन्तु। चन्दनसुगन्धद्रव्यादिभिः परिसरं सुगन्धमयं कुर्वन्तु। वर्णचूर्णैः रङ्गवल्लीं लेखयित्वा मार्गान् अलङ्कुर्वन्तु'' इति।

रामागमनवार्तां यदा श्रुता तदा अयोध्यानगरे सन्तोषतरङ्गाः प्रसृताः। सर्वे क्रियमाणं कार्यं तत्रैव परित्यज्य रामदर्शनार्थं प्रस्थितवन्तः। केचन गजान् आरुह्य प्रस्थितवन्तः। पुनः केचन रथम् आरुह्य प्रस्थिताः। सामान्याः नागरिकाः तु शकटम् आरुह्य पादाभ्यां वा ततः प्रस्थितवन्तः। दृष्टिः, जयन्तः, विजयः, सिद्धार्थः, अर्थसाधकः, अशोकः, मन्त्रपालः, समन्त्रश्चेति अष्ट मन्त्रिणः अपि रामस्य स्वागतार्थं प्रस्थितवन्तः। दशरथस्य पत्न्यः अपि वाहनानि आरुह्य रामदर्शनार्थं प्रस्थिताः।

रामपादुकायुगलं शिरसि धृत्वा भरतः रामस्य स्वागतार्थम् अग्रे प्रस्थितवान्। पुरोहिताः, पुरप्रमुखाः, वणिङ्नायकाः च हार-सुगन्धद्रव्यादिकं गृहीत्वा तम् अनुसृतवन्तः। छत्रं, चामरं, सुवर्णदण्डः इत्यादीनि राजचिह्नानि गृहीत्वा सैनिकाः अपि भरतम् अनुसृतवन्तः।

दीर्घसमयं यावत् प्रतीक्षा कृता चेदपि रामः यदा दृष्टिगोचरः न जातः तदा भरतः हनूमन्तम् उद्दिश्य पृष्टवान्– ''अये वीरवर! वानरकुले जातः भवान् कुलप्रवृत्तेः अनुगुणं दुश्चेष्टां प्रदर्शयन् असत्यं तु न उक्तवान्



खलु? रामस्य आगमनं सत्यम् एव खलु? एतावता अपि रामः किमर्थं दृष्टिगोचरः न जातः?'' इति।

तदा हनूमान् भरतम् उक्तवान्– ''भरद्वाजमुनिः वानराणां निमित्तं विशेषभोजनं व्यवस्थापितवान् अस्ति। आश्रमस्य उद्याने विकसितानि पुष्पाणि दृष्ट्वा समग्रा वानरसेना उत्साहयुक्ता जाता अस्ति। तत्र सध्यानं शृणोतु– अस्पष्टः वानरकोलाहलः श्रूयते खलु? प्रायः ते एतावता गोमतीनदीम् अतिक्रान्तवन्तः स्युः। पश्यतु तत्र आकाशे! पुष्पकविमानं मन्दम् आगच्छत् दृश्यते। कुबेरस्य तत् विमानम् इदानीं रामाधीनं जातम् अस्ति। तस्मिन् विमाने रामेण सह सीता, लक्ष्मणः, वानरराजः सुग्रीवः, राक्षसराजः विभीषणः इत्यादयः सन्ति। क्षणद्वयाभ्यन्तरे तत् विमानम् अत्र उपस्थितं भविष्यति'' इति।

अचिरात् एव विमानं जनानां दृष्टिगोचरं जातम्। ''तत्र पश्यन्तु! रामः आगच्छन् अस्ति'' इत्येषः जनानां कोलाहलः तत्र सर्वत्र व्याप्तः। रामं द्रष्टुम् इच्छन्तः सर्वे उत्थाय स्थितवन्तः। तेषाम् कातरता पराकाष्ठां गता आसीत्।

विमानं भूमौ अतिष्ठत्। पुरतः दृश्यमानं रामं भक्त्या प्रणम्य उक्तवान् भरतः– ''अग्रज! निश्चिते अवधौ उपस्थाय अस्मान् सर्वान् तोषितवान् अस्ति भवान्। भवद्दर्शनतः वयं सर्वे कृतकृत्याः स्मः'' इति।

रामः भरतं विमानम् आरोप्य सन्तोषेण





आलिङ्गितवान्। भरतः लक्ष्मणम् आलिङ्ग्य कुशलप्रश्नं पृष्ट्वा सीतां नमस्कृतवान्। सर्वान् वानरवीरान् आलिङ्गनेन अभिवन्द्य सुग्रीवम् उक्तवान् सः– "वयं चत्वारः सहोदराः स्मः। भवान् अस्माकं पञ्चमः सहोदरः" इति। ततः विभीषणं पश्यन्– "यः कष्टकाले उपकारं करोति सः एव वास्तविकम् आत्मीयमित्रम्। भवतः साहाय्यम् अविस्मरणीयम् अस्ति" इति उक्तवान्।

शत्रुघ्नः रामं लक्ष्मणं च प्रणम्य सीताम् अपि श्रद्धया नमस्कृतवान्। रामः मातरं कौसल्यां भक्त्या नमस्कृतवान्। ततः सुमित्रां, कैकेयीम्, आचार्यं वसिष्ठं चापि नमस्कृतवान्। सर्वे नागरिकाः महता उत्साहेन रामं स्वागतीकृतवन्तः।

भरतः पादुकायुगलं रामसमीपं नीत्वा स्वयं पादयोः धारयित्वा– "अग्रज! अद्यावधि यत् राज्यं पालितं तत् भवते अर्पितवान् अस्मि। आयोध्यां प्रात्यागतवन्तं भवन्तं दृष्ट्वा अहं नितरां सन्तुष्टः अस्मि। मम जन्म सार्थकं जातम्। मम इच्छा पूर्णा। अहं कृतकृत्यः अस्मि" इति उक्तवान्।

तेन एव विमानेन रामः नन्दिग्रामं प्राप्तवान्। ततः रामः विमानात् अवतीर्णः। रामेण सह स्थिताः सर्वे अपि विमानात् अवतीर्णवन्तः। रामः विमानं सूचितवान् यत् भवान् कुबेरसमीपं गच्छतु इति।

मन्त्री सुमन्त्रः स्वयं सारथ्यं वहन् रथम् आनीतवान्। रामस्य पट्टाभिषेकार्थं ज्योतिषिकैः मुहूर्तः निश्चितः। पट्टाभिषेकनिमित्तं रामः मङ्गलस्नानं कृतवान्। तावता एव सुग्रीव-हनूमदादयः अपि स्नानं समापितवन्तः आसन्। रामः रथे उपविष्टवान्। ततः सर्वे अयोध्यां प्रति प्रस्थितवन्तः।

ततः पूर्वम् एव दशरथस्य मन्त्रिणः अयोध्यां प्राप्तवन्तः आसन्। गुरुणा वसिष्ठेन सह समालोच्य राज्याभिषेकस्य मुहूर्तं निश्चित्य योग्यं सन्नाहम् आरब्धवन्तः।

रामः राजसभायां, सुग्रीवस्य मित्रतां, हनूमतः अपूर्वं सामर्थ्यं, तेन कृतानि

विविधानि असाधारणानि कृत्यानि, युद्धे वानरैः प्रदर्शितम् अपूर्वं शौर्यं, विभीषणस्य आगमनं, तेन युद्धे कृतं साहाय्यं च विस्तरेण सभासदः निवेदितवान्। एतत्सर्वं श्रुतवतां सभासदाम् आश्चर्यस्य सीमा एव न आसीत्। ततः रामः दशरथस्य प्रकोष्ठं प्रविष्य पूर्वतनघटनाः सर्वाः स्मृतवान्। वानरादीनां व्यवस्थार्थं योग्या व्यवस्था उपकल्पिता।

सुग्रीवः चतुरः सुवर्णकलशान् समर्थेभ्यः वानरेभ्यः दत्त्वा आज्ञापितवान्– "श्वः प्रातःकालतः पूर्वं चतुर्णां समुद्राणां जलं स्वीकृत्य अत्र उपस्थातव्यं भवद्भिः" इति।

जाम्बवान्, हनूमान्, वेगदर्शी, ऋषभः च कलशं गृहीत्वा ततः निर्गत्य पञ्चशतस्य नदीनां जलम् आनीतवन्तः। एतावता एव चर्तुणां समुद्राणां जलम् अपि वानरैः आनीतम् आसीत्।

ततः शास्त्रोक्तक्रमेण रामस्य राज्याभिषेकः प्रवृत्तः। रामः सीतया सह रत्नखचिते सिंहासने उपविष्टवान्। ऋत्विजः, पुरोहिताः, कन्यकाः, नागरिकप्रमुखाः, सैनिकप्रमुखाः च क्रमशः आगत्य अभिषेकं कृतवन्तः।

शत्रुघ्नः रामस्य पार्श्वे तिष्ठन् छत्रं गृहीतवान्। सुग्रीवः रामस्य एकस्मिन् पार्श्वे स्थित्वा चामरेण वीजितवान्। रामस्य अपरपार्श्वे स्थित्वा चामरेण वीजितवान् विभीषणः।

राज्याभिषेकस्य एतस्मिन् शुभे सन्दर्भे रामः ब्राह्मणेभ्यः वत्ससहिताः धेनूः, सुवर्णानि, वस्त्राणि च दानरूपेण दत्तवान्। सः सीतायै एकं रत्नहारं दत्त्वा उक्तवान्– "वानरेषु यः भवत्याः प्रियतमः, तस्मै एतं हारं ददातु भवती" इति। सीता हनूमते तं हारं दत्तवती। ततः रामः विविधवानरप्रमुखेभ्यः यथोचितानि उपायनानि दत्तवान्।

एवं रामस्य राज्याभिषेकं समाप्य विभीषणः लङ्कां प्रत्यागतवान्। रामः भरतं युवराजपदे अभिषिक्तवान्। ततः योग्येन क्रमेण राज्यशासनम् आरब्धवान् च।





# अप्रियः सेवकः

चीनादेशे पूर्वं कस्मिंश्चित् ग्रामे कश्चन भूस्वामी आसीत्। सः स्वभावेन नितरां दुष्टः। तस्य गृहे कोऽपि सेवकः चिरकालं न तिष्ठति स्म। यदा नूतनः सेवकः गृहम् आगच्छति तदा भूस्वामी कानिचन दिनानि तेन कार्यं कारयति स्म। यदा सेवकः वेतनार्थं विशेषाग्रहं करोति तदा सेवकस्य कार्ये लोपान् प्रदर्शयन्, धनम् अदत्त्वा एव तं गृहात् निष्कासयति स्म।

तस्मिन् ग्रामे सर्वे भूस्वामिनः दुष्टस्वभावं जानन्ति स्म। किन्तु अन्यग्रामेषु निवसन्तः सर्वे दरिद्राः भूस्वामिनः एतं स्वभावं ज्ञातुं न अर्हन्ति खलु? अतः ते अत्र आगत्य कांश्चन मासान् कार्यं कृत्वा धनं किमपि अप्राप्य अश्रूणि स्रावयन्तः ततः निर्गच्छन्ति स्म। एतत्सर्वं दृष्ट्वा भूस्वामी सन्तोषम् अनुभवति स्म।

कदाचित् दूरग्रामतः कश्चन बालकः उद्योगम् अपेक्ष्य आगत्य भूस्वामिनः गृहं प्रविष्टवान्।

"रे बालक! मया उक्तं कार्यं सम्यक् न क्रियते चेत् भवते वराटिका अपि न दीयते, भवान् इतः प्रेष्यते च। विचिन्त्य उद्योगम् अङ्गीकरोतु" इति सूचितवान् भूस्वामी।

"अत्र किं चिन्तनीयम् अस्ति? स्वामी यथा वदति तथा आचरणं सेवकस्य धर्मः। अतः भवतः वचनम् अवश्यम् अङ्गीकरोमि अहम्" इति उक्तवान् सः बालकः।

एकस्मिन् दिने भूस्वामी सेवकं बालकम् आहूय उक्तवान्– "रे, पर्वते वेणुसस्येषु पर्णानि जातानि सन्ति। अतः श्वः भवान् अस्माकं वृषभं तत्र नयतु। सः वृषभः वेणुपर्णानि खादतु। भवान् एव पर्णानि उत्पाट्य वृषभाय मा ददातु। सः एव स्वयं पर्णानि खादतु। मया यथा सूचितं तथैव

करणीयम्" इति।

"भवतु। भवता यथा उक्तं तथैव करोमि" इति उक्तवान् बालकः।

अनन्तरदिने प्रातःकाले एव सेवकः बालकः वृषभं पर्वतं नीतवान्। वेणुसस्यानां समीपे वृषभं नीत्वा एकस्मिन् वेणुवृक्षे वृषभं बद्धवान्। अनन्तरं दण्डेन तं वृषभं सम्यक् ताडयन्– "सस्यम् आरोहतु। आरुह्य पर्णानि खादतु" इति उच्चैः वक्तुम् आरब्धवान् च।

ताडनानि सोढुम् अशक्तः सः वृषभः वेणुगुल्मं परितः इतस्ततः धावितुम् आरब्धवान्। बालकस्य एतादृशं कार्यं दृष्ट्वा तस्मिन् मार्गे ये गच्छन्ति ते हसन्ति स्म। एषः विषयः कथमपि भूस्वामिना ज्ञातः। भूस्वामी वेगेन धावन् तत्र आगतवान्। कोपेन पृष्टवान् च– "रे वराक, किमर्थं वृषभं तथा ताडयति भवान्? किं भवान् वृषभं मारयितुम् इच्छति?" इति।

"स्वामिन्, भवान् न जानाति एतस्य वृषभस्य स्वभावम्। एतस्य महान् मदः। सस्यम् आरुह्य पर्णानि खादतु इति अहं बहोः कालतः वदन् एव अस्मि। तथापि एषः सस्यं न आरोहति एव। एषः सम्यक् ताडितः चेत् एव ज्ञातुं शक्नोति" इति उक्तवान् बालकः।

तदा भूस्वामी उक्तवान्– "भोः, अलं ताडनेन। सः वेणुपर्णानि न खादति चेत् त्यजतु। इदानीं तं वृषभं गृहं नयतु" इति।

एतस्य प्रकरणस्य अनन्तरं सेवकस्य बालकस्य विषये भूस्वामिनः असन्तोषः



प्रवृद्धः। भूस्वामी तं बालकम् न इच्छति। बालकस्य गृहात् प्रेषणार्थम् कः व्याजः प्रदर्शनीयः इति बहुधा चिन्तितवान् भूस्वामी।

एकस्मिन् दिने भूस्वामी सेवकम् बालकम् आहूय उक्तवान्– "अस्माकं गृहस्य उपरि अतीव विशाला छदिः अस्ति। वैशाल्यं तावत् अस्ति चेत् अपि तस्याः कोSपि उपयोगः नास्ति। अतः श्वः प्रातः भवान् विशालायाः छदेः उपरि शाकसस्यानि आरोपयतु" इति।

"भवतु। श्वः एव शाकसस्यानि आरोपयामि" इति उक्तवान् बालकः।

अनन्तरदिने प्रातः एव बालकः एकं खनित्रं स्वीकृत्य गृहस्य उपरि गतवान्। छदेः खननम् आरब्धवान् च। तस्मिन् समये भूस्वामी गृहस्य अन्तः शयितः आसीत्। खननस्य शब्दतः जागरितः भूस्वामी गृहात् बहिः आगत्य दृष्टवान् यत् सेवकः खननं कुर्वन् अस्ति इति। एतत् दृष्ट्वा भूस्वामी कोपेन उक्तवान्– "किमर्थं मृच्छदान् भञ्जयति भवान्?" इति।

तदा सेवकः बालकः उक्तवान्– "स्वामिन्, भवता एव उक्तं किल– गृहस्य उपरि शाकसस्यानि आरोपणीयानि इति? तदर्थं अहं खननं कुर्वन् अस्मि" इति।

"रे मूर्ख! भवतः सहवासः एव मम कष्टाय जातः। सस्यानाम् आरोपणम् एव मास्तु। कृपया भवान् अधः आगच्छतु" इति उक्तवान् भूस्वामी।



बालकः तत् कार्यं स्थगितवान्। अधः आगतवान् च।

कानिचन दिनानि अतीतानि। ग्रीष्मकालः आगतः। भूस्वामिनः क्षेत्रेषु धान्यसस्यानि जलस्य अभावस्य कारणतः म्लानानि जातानि। तत् दृष्ट्वा भूस्वामी बालकम् आहूय उक्तवान्– "भोः, उग्रात् सूर्यातपात् अस्माकं धान्यसस्यानि म्रियमाणानि सन्ति। अतः श्वः एव भवान् अस्माकं सर्वाणि क्षेत्राणि गृहस्य अन्तः आनीय सुरक्षितं यथा स्यात् तथा स्थापयतु" इति।

अनन्तरदिने प्रातःकाले उत्थानतः पूर्वम् एव कश्चन महान् शब्दः भूस्वामिना श्रुतः। त्वरया उत्थाय भूस्वामी शब्दम् अनुसृत्य गतवान्। तत्र सेवकः बालकः खनित्रेण गृहस्य भित्तिं भञ्जयन् आसीत्।

तावति काले तत्र आगतः भूस्वामी बालकस्य कार्यं दृष्ट्वा महता कोपेन पृष्टवान्– "रे वराक, गार्दभेय , भवान् किम् उन्मत्तः? किं मम गृहम् एव नाशयितुम् इच्छति? कीदृशः मूर्खः भवान्?" इति।

तदा बालकः– "भोः स्वामिन्, किमर्थं भवान् कुपितः भवति? क्षेत्राणि आनीय गृहे स्थापयतु इति भवता एव उक्तं खलु? एवं तर्हि क्षेत्राणाम् आनयनं मास्तु वा?" इति पृष्टवान्।

तदा "गृहम् पातयतु इति अहं न उक्तवान् किल!" इति उक्तवान् भूस्वामी।

तदा बालकः किमपि अजानन् इव पृष्टवान्– "न्यूनातिन्यूनं गृहस्य पुरतः विद्यमाना भित्तिः वा निष्कासनीया खलु? अन्यथा तादृशानि बृहत्गात्राणि क्षेत्राणि कथं वा गृहस्य अन्तः आनेतुं शक्यन्ते?" इति।

बालकस्य एतेन उत्तरेण भूस्वामी चकितः। सः स्वकीयं दोषं ज्ञातवान्। 'एतस्य सेवकस्य कार्येषु कमपि दोषं प्रदर्शयितुं न शक्नोमि' इति ज्ञातवान् भूस्वामी तस्मै प्रभूतं धनं दत्त्वा तं गृहात् प्रेषितवान्। अनन्तरकाले सर्वैः कर्मकरैः सह उत्तमरूपेण व्यवहारम् आरब्धवान् सः।



# र स वा र्ताः

## गौरीशङ्करशिखरम् आरूढवत्यः महिलाः

गौरीशङ्करशिखरम् आरूढवती प्रथमा महिला– जपान्देशीया जुङ्को टाबी। एतत् शिखरम् आरूढवती प्रथमा भारतीयमहिला बचेन्द्रीपाल्। द्विवारम् एतत् शिखरम् आरूढवती तु अस्मद्देशीया एव सन्तोषयादव्। १९९३ तमे वर्षे मे-मासस्य १० दिनाङ्के एषा एतत् साहसं कृतवती। १९९२ तमे वर्षे सा प्रथमवारं गौरीशङ्करशिखरम् आरूढवती आसीत्। यदा सा द्वितीयवारं शिखरारोहणं कृतवती तदा तया सह कुङ्ग भुटिया, डिक्कि डोल्मा– इत्येते महिले अपि आस्ताम्। महिलामात्रगणेन कृतं सर्वप्रथमं पर्वतारोहरणम् आसीत् एतत्। ततः सप्ताहा-भ्यन्तरे– तन्नाम मे-मासस्य १६ दिनाङ्के– बचेन्द्रीपाल्नायकत्वे दीपु शर्मा, राधादेवी, सुमन कुटियाल्, सविता मार्टोलिया– इत्येताः गौरीशङ्करशिखरम् आरूढवत्यः, यच्च विशेषविक्रमत्वेन परिगण्यते। तस्मिन् एव दिने स्पानिष्-पर्वतारोहणगणीयः नेपाल् षेर्पा अङ्गरीटा नवमवारम् एतत् शिखरम् आरूढवान्। एषः १९८३ तमे वर्षे प्रथमवारम् एतत् शिखरम् आरूढवान् आसीत्। ततः १९८४, १९८५, १९८७, १९८८, १९९०, १९९२– इत्येतेषु वर्षेषु तेन पुनरपि शिखरारोहणं कृतम्। एतेन साधितस्य विक्रमस्य अतिक्रमणं प्रायः दुःसाध्यम् एव।



## आकाशे विज्ञापिका-प्रकाशनम्

एतेषु दिनेषु आकाशे महावायुगोलानाम् उड्डायनद्वारा वाणिज्यप्रचारं कुर्वन्ति। एतं विषयं सामान्यतः सर्वे जानन्ति। विज्ञापिकाद्वारा जनाः सुलभतया आकृष्टाः भवन्ति। अमेरिकादेशे विद्यमाना काचित् संस्था सद्यः एव एकमैलदीर्घं 'बिल्बोर्ड्'नामकं वायुगोलकं आकाशे उड्डाययितुं प्रयत्नं कुर्वती अस्ति। एतस्य विरोधिनः केचन, 'एषः कश्चन भयङ्करः विषयः' इति भावयन्तः एतद्विषये विमर्शं कुर्वन्तः सन्ति। तथापि शीघ्रातिशीघ्रम् एव आकाशे विचित्रा आहारविज्ञापिका तु दृष्टिगोचरा भविष्यति एव।

## अपूर्वा घटी

लण्डन्नगरस्य 'वेस्ट् मिनिस्टर्'प्रदेशे एका बृहत्घटी अस्ति। तस्याः घण्टानादः प्रपञ्चे एव प्रख्यातः। प्रतिपञ्चदशनिमेषं, प्रत्यर्धघण्टं, प्रतिपञ्चचत्वारिंशन्निमेषं, प्रतिघण्टं च सुश्राव्यं घण्टानादं करोति एषा घटी। घण्टानादनिमित्तम् अस्यां घट्यां विशिष्टा घण्टा योजिता अस्ति। इदानीं मासद्वयतः प्रतिपञ्चदशनिमेषं यः नादः श्रूयते स्म, सः नादः स्थगितः अभवत्। चतुराः विज्ञानिनः तत्र गत्वा तां घटीं समीकृतवन्तः। पुनरपि सा घटी घण्टानादम् आरब्धवती। किन्तु मे-मासस्य १९ दिनाङ्के सायङ्काले ६-११ तः ९-१५ पर्यन्तं घण्टा-नादं एव न कृतवती एषा घटी। एतस्य किं कारणं स्यात् विज्ञानिनः यावत् चिन्तयन्तः आसन् तावता पुनरपि घण्टानादम् आरब्धवती एषा घटी।





# विधिनियमः

काशीनगरे पूर्वं राजेशनामकः युवकः आसीत्। तस्य बाल्ये एव तदीयौ मातापितरौ दिवङ्गतौ। अनन्तरं राजेशः ज्येष्ठानाम् अधिकारिणां साहाय्येन श्रद्धया विद्याभ्यासं समापितवान्, कस्मिंश्चित् कार्यालये कञ्चन उद्योगम् सम्पादितवान् च।

उद्योगप्राप्तेः अनन्तरं विवाहविषये राजेशस्य मनः आसक्तम्। यदि तस्य मातापितरौ जीवेताम् तर्हि एतावति काले राजेशस्य विवाहः समाप्तः अभविष्यत्। सः पत्न्या सह सुखेन आनन्देन च जीवनम् अपि अकरिष्यत्। किन्तु इदानीं विवाहः न जातः इति कारणतः भोजनं निद्रां च मठे कुर्वन् राजेशः जीवनं यापयति स्म।

अन्यस्य साहाय्यं विना विवाहः क्लेशकरः इति चिन्तयन् राजेशः एकदा आत्मीयं मित्रं स्वकीयम् आशयम् उक्तवान्।

तदा राजेशस्य स्नेहितः उक्तवान्– "मम परिचितः कश्चन न्यायाधिकारी अस्ति। तस्य विवाहवयस्का पुत्री अस्ति। सर्वप्रकारेण अपि सा भवतः अनुरूपा एव अस्ति। अहम् अद्य एव भवतः विषये न्यायाधिकारिणम् उक्त्वा अङ्गीकारयामि। श्वः प्रातः मणिकर्णिका-सोपानसमीपे भवान् मिलतु। तत्र मम प्रयत्नस्य फलं वदिष्यामि" इति।

'अस्तु' इति अङ्गीकृत्य राजेशः ततः गतवान्। तस्यां रात्रौ तस्य निद्रा एव न आगता। प्रातः चतुर्वादने एव उत्थाय बहिः कौमुदीं दृष्ट्वा प्रातःकालः जातः इति सः चिन्तितवान्। वेगेन मणिकर्णिकाप्रदेशं प्रति प्रस्थितवान् च।

मणिकर्णिकाप्रदेशः निर्जनः आसीत्। तत्र सोपाने उपविष्टः कश्चन दृश्यते स्म। 'तेन सह जल्पनं कुर्वन् किञ्चित्कालं यापयामि'

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

इति विचिन्त्य तस्य समीपं गतवान् राजेशः।

सोपानस्य उपरि उपविष्टः कश्चन वृद्धः। सः वृद्धः कौमुद्याः प्रकाशे तालपत्रेषु श्रद्धया किमपि लिखति स्म। वृद्धेन लिख्यमाना लिपिः विचित्रा आसीत्।

तत् दृष्ट्वा राजेशः पृष्टवान्– "तात, अहम् अनेकाः लिपीः जानामि। किन्तु भवता लिख्यमाना एषा विचित्रा लिपिः का?" इति।

वृद्धः तं दृष्ट्वा– "एषा ब्रह्मलिपिः" इति उक्त्वा पुनः स्वलेखनकार्ये मग्नः जातः।

राजेशः पुनः कुतूहलेन पृष्टवान्– "भवान् किं लिखन् अस्ति?" इति।

"सूर्यास्ततः सूर्योदयपर्यन्तं ये जन्म प्राप्नुवन्ति तेषां जातकानि" इति कार्यं कुर्वन् एव उक्तवान् वृद्धः।

ततः अल्पे एव काले वृद्धः लेखनकार्यं स्थगितवान्। अनन्तरं पत्राणि द्विधा विभज्य स्थापितवान्। स्यूततः श्वेतसूत्रं रक्तसूत्रं च बहिः आनीय केषुचित् पत्रेषु श्वेतसूत्रं, पुनः केषुचित् पत्रेषु रक्तसूत्रं च योजितवान्। अनन्तरं श्वेतसूत्र-रक्तसूत्रयोः युगलरूपेण बन्धनं कर्तुम् उद्युक्तः अभवत् च।

वृद्धस्य एतादृशं कार्यं पश्यन् राजेशः पृष्टवान्– "तात, भवता क्रियमाणः ग्रन्थिः कः?" इति।

तदा वृद्धः अवनतः सन् एव उक्तवान्– "एषः ब्रह्मग्रन्थिः। कस्य पुरुषस्य का पत्नी भवेत् इति पूर्वं मया यत् लिखितं तदनुगुणं



ग्रन्थिं कुर्वन् अस्मि" इति।

एतत् श्रुत्वा चकितःराजेशः उक्तवान्– "तर्हि मम पत्नी का भवेत् इति भवान् जानाति एव। किञ्चित्कालाभ्यन्तरे एव मम विवाहनिश्चयस्य वार्ताम् आनयति मम स्नेहितः। अतः अहं मम स्नेहितं प्रतीक्षमाणः अस्मि" इति।

तदा वृद्धः राजेशं पश्यन् उक्तवान्– "या भवतः पत्नी भविष्यति सा इदानीं वर्षत्रयस्य बालिका। यावत् सा सप्तदशवर्षीया न भवति तावत् भवतः विवाहः न भविष्यति। अतः चतुर्दशवर्षाणाम् अनन्तरम् एव भवतः विवाहः" इति।

"हन्त, चतुर्दशवर्षाणाम् अनन्तरं मम



विवाहः वा? अहो, दुःखदायकम् एतत्!" इति उक्तवान् राजेशः।

तदा वृद्धः उक्तवान्– "तत्र पश्यतु। एका महिला एकां बालिकाम् उन्नीय आगच्छन्ती अस्ति। सा महिला एकेन नेत्रेण विहीना अस्ति। तया उन्नीता बालिका एव भवतः भाविनी पत्नी" इति।

राजेशः ततः वेगेन तस्याः महिलायाः समीपं गतवान्। एकेन नेत्रेण विहीना सा मलिनानि वस्त्राणि धृतवती आसीत्। सा शिशुं सोपाने उपवेश्य गङ्गानद्यां स्नातुं त्वरया ततः गतवती। सा बालिका तस्याः पुत्री स्यात् इति चिन्तितवान् राजेशः।

सा एव बालिका स्वपत्नी भविष्यति इति चिन्तनमात्रेण तस्य महत् दुःखं जातम्। तस्य दृश्यस्य कल्पनम् अपि असह्यम् आसीत्। वृद्धः तावति काले ततः निर्गतवान् आसीत्। तस्य वृद्धस्य वचनं विश्वासार्हं वा न वा इति तस्मिन् क्षणे निर्णेतुम् अशक्तः अभवत् राजेशः। 'एषा बालिका मृता चेत् मनसः समाधानं भवेत्' इति चिन्तितवान् राजेशः।

राजेशः किञ्चित्कालं यावत् स्नेहितस्य प्रतीक्षां कृतवान्। किन्तु सः न आगतः। 'स्नेहितस्य कार्यं न फलितं स्यात्। अतः एव सः अत्र न आगतवान् स्यात्' इति चिन्तयन् राजेशः ततः प्रस्थितः।

राजेशः किञ्चिद्दूरं यदा गतवान्, तदा मार्गे परिचितकार्यालयस्य कश्चन कर्मकरः मिलितवान्। राजेशः कर्मकरम् उक्तवान्– "मणिकर्णिकाप्रदेशे लघुबालिकारूपेण काचन पिशाची अस्ति। भवान् इदानीम् एव तत्र गत्वा तां मारयति चेत् पारितोषिकरूपेण भवते दश सुवर्णनाणकानि दास्यामि" इति।

"पिशाची तु मारणीया एव। सा कुत्र अस्ति इति दर्शयतु। इदानीम् एव गत्वा मारयिष्यामि" इति उक्तवान् कर्मकरः।

तदा राजेशः "आगच्छतु, दर्शयामि" इति वदन् कर्मकरेण सह मणिकर्णिकां गतवान्। तावता सा महिला स्नानं समाप्य शिशुं गृहीत्वा गच्छन्ती आसीत्। दूरे गच्छन्तीं तां महिलां प्रदर्शयन् राजेशः उक्तवान्– "पश्यतु, सा महिला यां गृहीतवती सा एव

पिशाची। भवान् भवतः कार्यं साधयित्वा आगच्छतु" इति उक्त्वा शिशुहत्यां द्रष्टुम् अनिच्छन् ततः गतवान्।

कर्मकरः शिशुं गृहीत्वा गच्छन्तीं तां महिलाम् अनुसरन् मन्दं मन्दं तस्याः पृष्ठतः एव गच्छन् मन्दं लवित्रं उन्नीय तं शिशुं मारयितुम् उद्युक्तः। तावता सः शिशुः मुखम् उन्नीय तम् अपश्यत्। शिशोः मुखम् अत्याकर्षकम् आसीत्। नेत्रे तु मोहके आस्ताम्। मुखे मन्दहासः अपि विलसति स्म। 'यदि एतस्य शिशोः मारणम् अहं कुर्याम् तर्हि निश्चयेन पापभाक् भवेयम्' इति चिन्तितवान् सः। अतः सः शिशोः मारणविचारं परित्यज्य लवित्रेण तस्याः बालिकायाः ललाटभागे भ्रूसमीपे मन्दं स्पर्शं कृत्वा ततः वेगेन धावितवान्।

ततः कर्मकरः राजेशसमीपं गत्वा 'अहं पिशाचीं मारितवान्' इति उक्त्वा तस्मात् पारितोषिकं प्राप्य गतवान्।

'मया शिशुहत्या कारिता' इति चिन्तयन् राजेशः महान्तं पश्चात्तापम् अनुभूतवान्। किन्तु तादृशी मलिना बालिका मम पत्नी तु न भविष्यति इति चिन्तनेन सन्तोषम् अपि प्राप्तवान् सः। एतस्य प्रकरणस्य अनन्तरं राजेशः विवाहविषये बहुधा प्रयत्नं कृतवान्। किन्तु तस्य प्रयत्नः व्यर्थः एव अभवत्।

एवम् एव चतुर्दश वर्षाणि अतीतानि। कश्चन नूतनः न्यायाधिकारी राजेशस्य



कार्यालये एव उन्नताधिकारिस्थाने नियुक्तः जातः। राजेशस्य कार्यशैलीं, सामर्थ्यं, निष्ठां च दृष्ट्वा सन्तुष्टः सः अधिकारी, राजेशः अविवाहितः इति ज्ञातवान्।

एकस्मिन् दिने उन्नतः अधिकारी राजेशं पृष्टवान्– "किमर्थं भवान् इतोऽपि अविवाहितः एव अस्ति?" इति।

तदा राजेशः खेदेन उक्तवान्– "अहं विवाहितः भवितुं बहुकालतः प्रयत्नं कुर्वन् एव अस्मि। किन्तु मम एकोऽपि प्रयत्नः न सफलः" इति।

तदा अधिकारी उक्तवान्– "मम एका पुत्री अस्ति। सा इदानीं विवाहवयस्का अस्ति। सा बुद्धिमती रूपवती च। गृहकार्येषु सा

समर्था अस्ति। अतः भवान् मम पुत्रीम् एव यदि परिणयेत् तर्हि वरं भवेत्" इति।

राजेशः अधिकारिणः वचनं सन्तोषेण अङ्गीकृतवान्। अनन्तरम् अधिकारिणः पुत्र्याः राजेशस्य च विवाहः वैभवेन सम्पन्नः।

राजेशस्य पत्नी सुन्दरी। पत्न्या सह वसन् राजेशः स्वर्गसुखम् अनुभवति स्म। ललाटस्य दक्षिणभागः यथा आवृतः स्यात् तथा केशप्रसाधनं कृत्वा तस्मिन् स्थाने एकम् आभरणं धरति स्म राजेशस्य पत्नी। सर्वाणि आभरणानि निष्कास्य पेटिकायां स्थापयति चेदपि सा ललाटे धृतम् आभरणं न निष्कासयति स्म। एतत् दृष्ट्वा राजेशः कदाचित् पत्नीं पृष्टवान्– "किमर्थं भवती ललाटे आभरणं धरति?" इति।

तदा पत्नी उक्तवती– "मम तृतीये वयसि मार्गे गमनसमये दुष्टः कश्चन लवित्रेण मां मारयितुं प्रयत्नं कृतवान्। किन्तु न शक्तः। अनन्तरं ललाटे मृदुतया लवित्रेण घट्टयित्वा सः धावितवान्। सः व्रणः किणरूपेण अवशिष्टः। किणविकारः यथा न दृश्येत तथा अहम् एवं केशप्रसाधनं करोमि" इति।

तदा आश्चर्यचकितः राजेशः पृष्टवान्– "तर्हि गङ्गानद्याः समीपे या अन्धा महिला भवतीं नयन्ती आसीत् सा भवत्याः माता वा?" इति।

पत्युः प्रश्नेन चकिता पत्नी– "तां भवान् कथं जानाति? सा मम धात्री। सा एव मां पालितवती। अहम् एतस्य अधिकारिणः पुत्री न। यथा भवतः बाल्ये एव मातापितरौ दिवङ्गतौ तथैव ममापि बाल्ये एव मातापितरौ दिवङ्गतौ। सा वृद्धा धात्री एव मां पोषितवती। अनन्तरं मम पितृव्यः मां दत्तकरूपेण स्वीकृतवान्" इति उक्तवती।

तदा राजेशः कमपि विषयम् अगोपयन् पूर्वं प्रवृत्तं सर्वं पत्नीम् उक्तवान्। सा अपि पत्युः विषये अन्यथा चिन्तनम् अकृत्वा उक्तवती– "एवं तर्हि तस्मिन् दिने मणिकर्णिकाप्रदेशे भवता दृष्टः वृद्धपुरुषः साक्षात् ब्रह्मा एव स्यात्" इति।



# प्रकृतिवैचित्र्याणि–

## बहूपयोगी नारिकेलवृक्षः

नारिकेलवृक्षस्य न कोऽपि भागः निरुपयोगी इत्यतः एव स च वृक्षः 'कल्पवृक्षः' इति उच्यते। 'हरिद्वर्णं सुवर्णम्' इत्यपि उच्यते। अपक्वफलस्य जलं जीवसत्त्वैः खनिजलवणैः युक्तं बलवर्धकं पानीयम्। एतादृशस्य फलस्य सारः तु अमृततुल्यः। नारिकेलफलं पाके बहुधा उपयुज्यते। शुष्कनारिकेलतः तैलं निष्पाद्यते। नारिकेलतैलं केशसमृद्धिकरम्। फेनकस्य, अलङ्कारसामग्रीणाम्, औषधस्य च निर्माणे नारिकेलतैलम् उपयुज्यते। तैलप्राप्त्यनन्तरं शिष्टः भागः पशूनां पिण्याकतां प्राप्नोति। नारिकेलावरणेन



विविधानि अलङ्कारवस्तूनि निर्मीयन्ते। नारिकेलत्वचः तन्तुभिः रज्जुः, कटः इत्यादीनि निर्मीयन्ते। नारिकेलपत्राणि गृहाच्छादकत्वेन उपयुज्यन्ते। तथैव नारिकेलपत्रशलाकाभिः सम्मार्जन्यः क्रियन्ते, याश्च स्वच्छीकरणे अत्युपयोगीनि साधनानि। नारिकेलप्रकाण्डः तु गृहस्य मुख्यस्तम्भरूपेण उपयुज्यते। नारिकेलवृक्षः प्रायः २५ मीटर्-उन्नतं वर्धते। आरोपितं सस्यं चतुर्वर्षाभ्यन्तरे वृक्षत्वं प्राप्य फलति। उत्तमजातीयं सस्यं प्रतिवर्षं प्रायः ३०० फलानि ददाति। प्रतिमासद्वयं वृक्षात् फलानि उत्पाट्यन्ते।

## गर्भधारी जलाश्वः

अनतिगभीरे समुद्रजले निवसतां जलाश्वनामकानां लघुजीविनां जीवनक्रमः तु अतिविचित्रः। एते जलाश्वाः मीनाः इव न तिर्यग्गत्या तरन्ति, अपि तु पुरोगत्या। एतेषां मुखम् अश्वानाम् इव भवति। अतः एव 'जलाश्वः' इति नाम। एते नेत्रद्वयेन एव परितः दृष्टिं प्रसारयितुम् अर्हन्ति। (पुम्) जलाश्वस्य उदरस्य अधः स्यूतसदृशः कश्चन भागः भवति। जलाश्वा



जलाश्वसमीपम् आगत्य स्यूतसदृशे भागे सकृत् २००० अण्डानि प्रसूते। एतानि अण्डानि जलाश्वः एव पालयति पोषयति च। यदा अण्डेभ्यः शावकानाम् उत्पत्तिकालः सन्निहितः भवति तदा स्यूतसदृशस्य अङ्गस्य मुखं स्वयम् उद्घाटितं भवति। ततः शावकाः बहिः आगच्छन्ति।

# पाकः प्रचलति वा?

| | |
|---|---|
| रेखा –किं भगिनि, पाकः प्रचलति वा? | Hi Rekha, are you cooking? |
| लता –पाकः समाप्तः। | It is over. |
| रे – कथम् एतत्? अद्य उषसि एव पाकम् आरब्धवती वा भवती? | What is it? Started very early in the morning? |
| ल –न तथा। यथापूर्वम् अष्टवादनानन्तरम् एव। अद्य पाके विशेषः कोऽपि नास्ति। | Not at all. Only after 8 O'clock as usual. There is nothing special today. |
| रे – किं कृतवती भवती? | What have you prepared? |
| ल –सारमात्रम्। | Only rasam. |
| रे – किम् पतिः गृहे नास्ति? | Why, is your husband not in town? |
| ल –स तु अस्ति एव। ममैव उत्साहः नास्ति। | He is in town but I am not feeling well. |
| रे – अस्वास्थ्यं किमपि....? | Anything wrong with your health? |
| ल –अस्वास्थ्यं किमपि नास्ति। ह्यः आरभ्य महती श्रान्तिः अनुभूयते। किञ्चित् विश्रान्तिः स्वीकरणीया इति अद्य अहं शीघ्रं पाकं समापितवती। | Nothing like that. I have a tired feeling from yesterday. I wanted to have some rest and so prepared food early. |
| रे – वैद्यं कमपि दृष्टवती वा? | You went to the doctor? |
| ल –किमर्थं वैद्यदर्शनम्? कषायं पीतवती अस्मि। अर्धं दिनं यावत् विश्रान्तिः स्वीकृता चेत् सर्वं समीचीनं भविष्यति। आर्यपुत्रः आगतः। अहम् आगच्छामि तावत्। | No, there is no need. I took some kashayam. I should be all right after some rest. My husband has come. We shall meet again. |
| रे – अहो, मयापि विस्मृतम्। न जाने– पक्वतार्थं स्थापितस्य दालस्य का गतिः जाता इति! भगिनि, पुनः मिलामः। | Oh, I forgot! I do not know what happened to the dhal which was on the oven! OK. See you again. |

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अतिथिगृहम् - | Guest House |
| अध्येतव्यम् - | Should read |
| अनुरूपः - | Suitable |
| अवगन्तुम् - | To know |
| अस्थानम् - | Inappropriate place |
| अस्मत्तः - | From us |
| आरोहति - | Climbs |
| उपेक्षितवान् - | Neglected |
| कपोतः - | Pigeon |
| कांस्यपात्रम् - | Brass vessel |
| किणः - | A scar |
| केशप्रसाधनम् - | Combing the hair |
| कौमुदी - | Moonlight |
| खनित्रम् - | Spade |
| गृध्रः - | Eagle |
| ग्रन्थिः - | Knot |
| छदिः - | Roof |
| जीवसत्त्वम् - | Vitamin |
| तक्रम् - | Buttermilk |
| नीडम् - | Nest |
| पिण्याकः - | Olicake |
| पूर्वाश्रमः - | Period of life before Sanyasa |
| फेनकम् - | Soap |
| बाणवारकम् - | A shield |
| भाषते - | Speaks |
| भ्रूः - | Eyebrow |
| मदः - | Intoxication |
| मृच्छदः - | Tile |
| म्लानम् - | Withered |
| लवित्रम् - | Sickle |
| विकिरति - | Scatters |
| विज्ञापिका - | Advertisement |
| विरोद्धुम् - | To oppose |
| वृषभः - | Ox |
| व्यग्रः - | Busy |
| व्रणः - | Wound |
| समतलः - | Of equal level |
| सम्प्रदायः - | Traditional usage |
| सम्भाव्यता - | Possibility |
| हठात् - | Suddenly |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां नवम्बर्-९३ मासे प्रकटयिष्यामः।



D.N. Prasad



Devidas Kasbekar

* उपरितनं चित्रद्वयं पश्यन्तु। * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा सप्टम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

## 'जुलै'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **क्रीडाकाले न हि गण्यते खलु अपायः।**

द्वितीयचित्रम् - **हन्त! उदरम्भरणार्थं कीदृशोऽयम् उपायः?**

प्रेषकः - श्री किरण पाटीलः, सोना चाळ् ब्लाक्-बी, गान्धीनगरम्, पूर्वजोगेश्वरी, मुम्बयी-६०


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ४८-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास्-६०००२६



**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**



**The stories, articles and designs contained herein are the exclusive property of the Publishers and copying or adapting them in any manner will be dealt with according to law.**

Bakeman's

# YOU'LL DROP



## Everything for BAKEMAN'S MILK DROPS





CHANDAMAMA (Sanskrit) September 1993 Regd. No. TN / MS (S) 302

मिठाई में
नारियल
मुँह में
हलचल






nutrine
COOKIES




बच्चे झूमें-गायें, मौज मनायें
कोकानाका कुकीज




Visesh/NC/9090/Hin